Krishna Daya Bharan

Jatakalankar with tika

जातकालंकार सटीक

Samskrit

Printed on paper

1787 saka

Folio 83

10.8"x4"

Complete

श्रीगणेशायनमः वस्वर्णब्रह्मविद्यापरिचयचतुरंश्रीशुकंव्यासपुत्रंनत्वाचार्यंमुनीनांहरिपदकमलेप्रेमविश्रामभाजां स्विष्टंस्वेष्टदेवंश्रुतिसमधिगतंमाधवं भावयित्वाभावैरुद्भाव्यतेऽस्मैप्रवरमतिमुदेजातकालंकृतश्रीः ॥१॥ अथज्योतिर्वित्तिलकश्छंदोलंकृतिकाव्यरचनानिपुणः श्रीगणेशकविःश्रीशुकजातकानुरोधिजातकालंकारनामकंग्रंथंचिकीर्षुस्तदादौनिर्विघ्नपरिसमाप्त्यर्थंशिष्टाचारक्रमगतंभगवद्विभूतिभूतगुरुगणेशभारतीकर्मप्रणिपातपुरःसरंवस्तुनिर्देशात्मकंमंगलमाचरतिद्वाभ्यांशार्दूलविक्रीडिताभ्यां सानंदमिति सद्भावाकलितमितिच गणेशकृतिनागणेशनाम्नाग्रंथकरणकुशलेनमयातज्जातकंवृ

सानंदंप्रणिपत्यसिद्धिसदनंलंबोदरंभारतींसूर्यादिग्रहमंडलंनिजगुरुंभक्त्यात्वदद्व्जेस्थितम् ॥ येषामंघ्रिसरोरुहस्मरणतो
नानाविधाःसिद्धयःसिद्धिंयांतिलघुप्रयांतिविलयंप्रत्यूहशैलव्रजाः ॥ १ ॥

त्तस्रग्धरयास्रग्धरावृत्तैःप्रव्यक्तंक्रियतेस्पष्टार्थंयथास्यात्तथाविधीयतइत्यर्थः किंकृत्वाभक्त्यातान्सिद्धिसदनान्नत्वानमस्कृत्यतान्किंविधान्येषामंघ्रिसरोरुहस्मरणतःनानाविधाःअनेकविधाःसिद्धयःकार्यसिद्धयः सिद्धिंपूर्णतांयांति प्रत्यूहशैलव्रजाःविघ्नपर्वतसमूहाःविघ्नोंतरायःप्रत्यूहइत्यमरःव्रजोगोष्ठाध्ववृंदेषुइत्यमरःलघुशीघ्रंविलयंयांतिनश्यंति लघुक्षिप्रमरंद्रुतमित्यमरःलघ्विवतिपदंशीघ्रतावाचकंदेहलीदीपकन्यायेनोभयत्रान्वेति तान्कान्तदाहसिद्धिसदनंसिद्धिर्लक्ष्मीःतस्याःसदनंगृहंनिवासस्थानमितियावत्श्रीनिवासमित्यर्थःत्वंसिद्धिस्त्वंस्वधास्वाहेत्यादिलक्ष्मीस्तुत्यारंभेसिद्धिशब्दस्यलक्ष्म्यांप्रयुक्तत्वात्सिद्धिर्लक्ष्मीरितिनित्यविकल्पोर्थःकीदृशंसिद्धिसदनंसानंदंआ ॥१॥

वंदेनसहितं ब्रह्मण आनंदः आनंदंब्रह्मणोविद्वानितिश्रुतेः सानंदमितिविशेषणपदंभगवतोन्यत्रनोपपद्यते हृदब्जोस्थितहृदयकमलवासिनं सर्वस्यचाहं हृदिसन्निविष्टइतिभगवद्वचनात् भक्त्याप्रीतिपूर्वकानुस्मृत्या निजगुरुंश्रीमच्छिवाख्यंलंबोदरंविनायकं भारतींसरस्वतीं सूर्यादिग्रहमंडलं रव्यादी नांग्रहाणांमंडलंसमूहंच प्रणिपत्यनमस्कृत्यशुकास्यगलितं शुकमुनिमुखादुद्भूतंगाथोक्ति गाथानांश्लोकाविधुराणांगिरांउक्तिर्व्यवहारः यस्मिन्नूत थाभूतं कथंव्यक्तंक्रियते यथाशुकास्यात्गलितंश्रीमद्भागवतंमहापुराणंश्रीधरस्वामिनाव्यक्तंकृतमित्यध्याहारः कथंभूतंभागवतंजातकंच सद्भावाकलितं

सद्भावाकलितंपदार्थललितंयोगांगलीलांचितंश्रीमद्भागवतंशुकास्यगलितंयच्छ्रीधरस्वामिना ॥ सुव्यक्तंक्रियतेगणेश कविनागाथोक्तितज्जातकंवृत्तस्रग्धरयाजनादिसुफलंज्योतिर्विदांजीवनं ॥ २ ॥

सत्प्रशस्तोभावोविष्णुभक्तिः तेनाकलितंविशि ष्टंजातकपक्षेसद्भावैस्तन्वादिद्वादशभावैस्तात्पर्यैर्वाविशिष्टं पदार्थललितंपदार्थैः परभक्त्युद्योतकैःश्रवणकीर्तनादिभिः ललितंरुचिरंजातकपक्षेपदार्थैःसा नंदसदनादिभिर्मनोहरं योगांगलीलांचितंयोगोभक्तियोगस्तस्यांगानियमनियमासनप्राणायामध्यानधारणासमाधयः तेषांलीलाउपदेशविशेषास्ताभिरं चितंमहितं जातकपक्षेयोगांगानिग्रहभावादीनितेषांलीलायोग्यत्वेनघटनविशेषास्ताभिर्महितंप्रशस्तमित्यर्थः ज्योतिर्विदांजीवनंज्योतिःपरमात्मानाराय णःपरोज्योतिरितिश्रुतेः तद्विदांब्रह्मविदांजीवनंकालक्षेपयोग्यंजातकपक्षेज्योतिर्विदांगणकानांजीविकाप्रदत्वाज्जीवनमित्यर्थःवृत्तस्रग्धरयास्रग्धरावृत्ते

रित्यर्थः जात्यभिप्रायेणैकवचनोक्तिः तस्यलक्षणंचत्वारोयत्रवर्णाःप्रथममित्यादि ॥१ ॥२॥ ननुश्रीवरस्वामिवद्गुणतापिशुकजातकव्याख्यानेकर्त्तव्यग्रं
थारंभोनोचितस्तत्राह यत्पूर्वमितिगणेशनामाऽहंश्रीमच्छिवानुज्ञयावेदशास्त्रसंपन्नशिवनाम्नः गुरोराज्ञयातत्प्रीत्यर्थमितिभावः पूर्वभवकाले शुकास्यग
लितंछंदोरहितत्वात्फक्किकारूपंगूढतमंअतिशयेनगहनंनतुनिशदं परमंसारार्थनिरूपणेनोत्कृष्टं यज्जातकं तदेवस्रग्धरावृत्तैश्चारुरुचिरंविशदंकुर्वे फक्कि

यत्पूर्वंपरमंशुकास्यगलितंसज्जातकंफक्किकारूपंगूढतमंतदेवविशदंकुर्वेगणेशोस्म्यहम् ॥
दैवज्ञःसुतरांयशःसुखमतिःश्रीहर्षदंस्रग्धरावृत्तैश्चारुनृणांशुभायनपदंश्रीमच्छिवानुज्ञया ॥ ३ ॥

कारूपस्यगूढतमस्यविशदीकरणंश्लोकैरेवोचितमित्याशयः कथंभूतोगणशः दैवज्ञाऽदृष्टवेत्ता कर्तव्यग्रंथभाविवार्तादर्शीनिगूढभावःसुतरांयशः सुख
मतिः अतिशयितकीर्तिजन्यसुखेमतिर्यस्यसः प्रयोजनगर्भमिदंविशेषणं यशोऽन्यस्वार्थमितिभावः कीदृशंतत् श्रीहर्षदंश्रियंहर्षंचददातितत् शुभायनपदं
शुभायनानांशुभजातकानांआनंदसिद्धिसदनादीनांपदंस्थानं ॥३ ॥

ननुसत्कवीनांहर्षप्रदंनातकंनस्यादत आह भूयांसइति भूमौयद्यपिकाव्यगुंफेगद्यपद्यरचनायांनिजमतिरचनाशालिनः निजधियायाकाव्यरचनातयाशालंते तेभूयांसः निपुणाः संख्यावंतः कवयः संति तथापिप्रचुरपरगुणानंदलीलांभजंते प्रकृष्टपरगुणानुभवजन्यानंदलीलांभजंतेउद्वहंतिनेपिक्षतइत्यर्थः परगुणपरमाणून्पर्वतीकृत्यनित्यंनिजन्हदिविकसंतः संतिसंतः कियंतइत्युक्तत्वात्कृत्यानुपरगुणानुभवजन्यप्रमोदएवतेषांलीलेतिभावः उक्तमर्थमर्थांतरन्यासेनद्रढयति चंचद्गांभीर्येचपद्माचाविबुधविटपिनश्चचंचद्गांभीर्येपद्माविबुधविटपिनः चंचंतोद्योतमानाः गांभीर्यादयश्चए

भूयांसःसंतिभूमौनिजमतिरचनाशालिनःकाव्यगुंफेसंख्यावंतस्तथापिप्रचुरपरगुणानंदलीलांभजंते ॥ चंचद्गांभीर्यपद्माविबुधविटपिनांजन्मसंप्राप्तिनूनंमर्यादांनस्वकीयांत्यजतिकिलमहान्रत्नधामासरस्वान् ॥ ४ ॥

तेषांजन्मसंप्राप्तिः आश्रयेपिरत्नधामापिरत्नगृहमपिसरस्वान्समुद्रः स्वकीयांमर्यादांस्थितिंनत्यजतिकिंतथैवकवयोपिप्रमोदेरान्नितिभावः गांभीर्यंनिश्चलतापद्मालक्ष्मीः विबुधविटपीपारिजातः अत्ररत्नधामेतिपदंचिंत्यं धामशब्दस्यनपुंसकलिंगत्वात् अत्रतत्पुरुषसमासेपरवल्लिंगंद्वंद्वतत्पुरुषयोरित्यनुशासनेनरत्नधामेतिनपुंसकांतत्वस्यादंतत्वात् अतोरत्नधामाप्युदन्वानितिपाठःसमीचीनः ॥ ४ ॥

अथतन्वादीनांसामान्यविशेषसंज्ञाः कथयतेयावदध्यायं आदौतावल्लग्नादीनांदेहादिसंज्ञाः तेषांसर्वेषांभावसंज्ञांचशार्दूलविक्रीडितेनाह देहोद्रव्यपरा क्रमाविति लग्नतः ल्यपूलोपेपंचमी लग्नमारभ्यक्रमेणदेहादयोद्वादशभावाः गदिताः उक्तास्तत्रलग्नंदेहोदेहभावः द्वितीयतृतीयौद्रव्यपराक्रमौ द्रव्यपरा क्रमभावौ चतुर्थपंचमौभावौ सुखसुतौ षष्ठः शत्रुः सप्तमभावःकलत्रं अष्टमोमृतिः नवमोभाग्यः दशमंराज्यपदं एकादशद्वादशौलाभव्ययौलाभव्यय

देहोद्रव्यपराक्रमौसुखसुतौशत्रुःकलत्रंमृतिर्भाग्यंराज्यपदंक्रमेणगदितालाभव्ययौलग्नतः ॥ भावाद्वादशतत्रसौख्यशर णंदेहोमतोदेहिनांतस्मादेवशुभाशुभाख्यफलजःकार्योबुधैर्निर्णयः ॥ ५ ॥लग्नंमूर्तिस्तथांगंतनुरुदयवपुःकल्पमाद्यंततः स्वंकोशार्थाख्यंकुटुंबंधनमथसहजंभ्रातृदुश्चिक्यसंज्ञं ॥ अंबापातालतुर्यंहिबुकगृहसुहृद्वाहनंयानसंज्ञंवंध्वाख्यंचांबुनीरं जलमथतनयंबुद्धिविद्यात्मजाख्यं ॥ ६ ॥

नामकौ तत्रतेषुदेहिनांदेहःसौख्यशरणंसुखाश्रयः मतः अतोबुधैः ज्योतिर्विद्भिस्तस्माद्देहादेव लग्नभावादेवशुभाशुभाख्यफलजोनिर्णयोवक्ष्यमाणप्रकारेणकार्यः ॥ ५ ॥ लग्नमिति लग्नंपूर्व्यादिशब्दवाच्यमितिमुनयःऊचुरितितृतीयेनान्वयः मूर्त्तिः अंगतनुरुदयः वपुः कल्पमितिसमाहारःउदयःवपुःकल्पमाद्यंतन्वादयोलग्नपर्यायाः इतिप्रथमभावःततोनंतरंधनंस्वंकोशार्थाख्यंकोशश्चार्थश्चकोशार्थौआ ख्यायस्यसतथातंधनंस्वादिसंज्ञमूचुरित्यन्वयः एवमग्रेपि सहजंभ्रातृदुश्चिक्यसंज्ञंतृतीयभावः अंबापातालतुर्यंहिबुकगृहसुहृद्वाहनंयानसंज्ञंयाननाम

कं एवंबंधवाख्यंबंधुसंज्ञं अंबुनीरंजलंएतेचतुर्थभावस्यपर्यायाइतिभावः अथतनयंबुद्धिविद्यात्मजाख्यं वाक्स्थानंपंचममित्यग्रिमेणसंबंधःस्यात् पंचमभावस्यैतेपर्यायाः ॥६॥ वाक्स्थानमिति अथषष्ठंरिपुद्वेषवैरिक्षताख्यंऊचुः रिपुद्वेषवैरिक्षतनामकमित्यर्थः अथसप्तमंजामित्रमस्तंस्मरमदनमदयूनकामाभिधानंऊचुः सप्तमंजामित्रास्तंस्मरमदनादिनामकमित्यर्थः अथाष्टमंरंध्रायुश्छिद्रनिधनलयपदंमृत्युं अष्टमंरंध्रादिनामकमित्यूचुः अतोनवममिहशा

वाक्स्थानंपंचमंस्यात्तनुजमथरिपुद्वेषवैरिक्षताख्यंषष्ठंजामित्रमस्तंस्मरमदनमदयूनकामाभिधानं ॥ रंध्रायुश्छिद्रयाम्यंनिधनलयपदंचाष्टमंमृत्युरन्यद्गुर्वाख्यंधर्मसंज्ञंनवममिहशुभंस्यात्तपोमार्गसंज्ञं ॥ ७ ॥ तातान्नामानकर्मास्पदगगननभोव्योममेषूरणाख्यंमध्यंव्यापारमूचुर्दशममथभवंचागमंप्राप्तिमायं ॥ इत्थंप्रांत्यांतिमाख्यंमुनयइहततोद्वादशंरिःफमाहुर्ग्राह्यं बुध्वाप्रवीणैर्यदधिकममुतःसंज्ञयातस्यतच्च ॥ ८ ॥

स्त्रगुर्वाख्यंधर्मसंज्ञंशुभंतपोमार्गसंज्ञंऊचुः ॥ ७ ॥ तातेति अथतनोर्दशमंतातादिनामकमूचुरिति आज्ञामानंआज्ञानामकंकर्मआस्पदंगगनंनभोव्योममेषूरणंमध्यमव्यापारमूचुरितिस्फुटाव्यक्तिः अथभवंएकादशंआगमंप्राप्तिंआयमूचुः इत्थमुक्तं ततोद्वादशंप्रांत्यांतिमाख्यं प्रांत्यनामकं अंतिमंरिःफंचाहुः यदमुतःप्रोक्तात्पर्यायसमुदायात् अधिकंदृश्येत् तस्यतस्ययन्नामोक्तंनामसंज्ञयापर्यायंबुध्वातत्तुल्यार्थंशुद्धंप्रवीणैर्ग्राह्यं यथावित्तशब्देनतुल्यार्थंधनं सहोत्थेनसहजभावोग्राह्यइति ॥ ८ ॥

जा० लं० आद्यमिति इह शास्त्रे बुधैः आद्यं चतुर्थं सप्तमं दशमं केंद्रमुक्तं परतः कंटकाख्यं चतुष्टयं च स्यात् चतुष्टयमेव चातुष्टयं पंचमं नवमं त्रिकोणमुक्तं मृत्युलाभात्मजा टी०
र्थं अष्टममेकादश पंचमं द्वितीयं पणफरमुक्तं नवमं द्वादशं षष्ठं सहजं आपोक्लिमसंज्ञं उदितं वैरिरिःफाष्टमाख्यं षष्ठद्वादशाष्टमं त्रिकमुक्तं ॥ ९ ॥ अथ मित्रश
॥४॥ त्रूनेकेन शार्दूलविक्रीडितेनाह चंद्रेति चंद्रेज्यक्षितिजादयः अर्कादेः सुहृदः बुधादयः समाः अन्ये वैरिणः मताः मुनिभिरिति शेषः सूर्यस्य चंद्रेज्यक्षि

आद्यं तुर्यकलत्रदशममिह बुधैः केंद्रमुक्तं त्रिकोणं पुत्रं धर्माख्यमुक्तं पणफरमुदितं मृत्युलाभात्मजार्थं ॥ धर्मं चापोक्लिमाख्यं व्य
यरिपुसहजं कंटकाख्यं हि केंद्रं चैतच्चातुष्टयं स्यात्त्रिकमिह गदितं वैरिरिःफांतकाख्यं ॥९॥ चंद्रेज्यक्षितिजा रवींदुतनयौ
गुर्विंदुसूर्याः क्रमाच्छुक्रार्कौ रविचंद्रभूमितनया ज्ञार्कासितज्ञौ मताः ॥ अर्कादेः सुहृदः समा अथ बुधः सर्वे हि शुक्रार्कजौ
भौमाचार्ययमा यमः कुजगुरू पूज्यः परे वैरिणः ॥ १० ॥

तिजाः सुहृदः मित्राणि बुधः समः शुक्रशनी शत्रू रविबुधौ चंद्रस्य मित्रे सर्वे
अन्ये समाः गुर्विंदुसूर्याः भौमस्य मित्राणि शुक्रशनी समौ बुधः शत्रुः शुक्रसूर्यौ बुधस्य मित्रे भौमगुरुशनयः समाः चंद्रः शत्रुः रविचंद्रभौमाः गुरोर्मित्राणि ॥४॥
शनिः समः बुधशुक्रौ शत्रू बुधशनी शुक्रस्य मित्रे कुजगुरू समौ रविचंद्रौ शत्रू सितज्ञौ शनेर्मित्रे गुरुः समः रवींदुभौमाः शत्रवः ॥ १० ॥

अथदृष्टीःपृथ्वीवृत्तेनाह तृतीयेति ग्रहस्तृतीयदशमादिषुचरणवृद्धितःपश्यति तत्रतृतीयदशमेचरणदृष्ट्यापश्यति नवमपंचमेद्विचरणदृष्ट्यापश्यति अ ष्टांबुनि अष्टमचतुर्थचरणदृष्ट्यापश्यति समगृहंसप्तमंचतुश्चरणदृष्ट्यापूर्वंपश्यतीत्यर्थः तृतीयदशमेशनिः नवमपंचमेगुरुःचतुर्थाष्टमेभौमः पूर्णदृष्ट्यापश्य तीतिजातकांतरेसविशेषोज्ञेयः इमेकुजादयोमेषतःमेषमारभ्यभवनपाः राशीशाः मित्रस्यकुजइत्यादि ॥ ११ ॥ अध्यायंसमापयतिशालिन्या वृद्यैरिति

तृतीयदशमेग्रहोनवमपंचमेष्टांबुनिक्रमाच्चरणवृद्धितःस्मरगृहंततःपश्यति ॥ कुजःसितबुधौशशीरविबुधौसितक्ष्मासुतौ गुरुर्यमशनीगुरुर्भवनपाइमेमेषतः ॥११॥ वृद्यैःपद्यैर्गुंफितेसूरितोषेलंकाराख्येजातकेमंजुलेस्मिन्॥संज्ञाध्यायःश्रीगणे शेनवर्यैर्वृत्तैर्दिग्भिःसंयुतोयंप्रणीतः ॥१२॥ इतिजातकालंकारेप्रथमाध्यायः ॥१॥

श्रीगणेशेनविद्वताउतश्रीविशिष्टेनगणेशेनअलंकाराख्येअलंकारनामकेमंजुलेरुचिरेवृद्यैःपद्यैर्गुंफितेमनोहरैः श्लोकैः रचितेऽस्मिन्ग्रंथेवर्यैः श्रेष्ठैः दि ग्भिः दशभिःश्लोकैः अयंआदिमः प्रथमः संज्ञाध्यायः प्रणीतः उक्तः रचितइत्यर्थः ॥ १२ ॥ ॥ इतिश्रीजातकालंकारटीकायांप्रथमोऽध्यायः ॥ १

अथभावाध्यायोव्याख्यायते कविःस्वविनयंविशदयन्भावफलंवक्तुंपृथ्वीवृत्तेनप्रतिजानीते शुकेति शुकाननसरोरुहाद्गलितःअर्हंतनुभावतःततआ
रभ्यतत्फलंजातकफलं अधुनाब्रवीमि हेबुधाःपंडिताः अत्रवचनेममयात्किमपिचापलंस्यात्तद्यूयंक्षमध्वं इतिप्रार्थना किंकृत्वा ब्रवीमि अत्रभूमितले
शुकाननसरोरुहात् शुकमुखारविंदाद्गलितंशिष्यप्रशिष्यद्वाराप्राप्तंपरमसुंदरंसकलंफलंआकलय्यविचार्य कथंभूतंफलं प्रवरदैवविदांसंतोषदंउत्कृष्टज्यो
तिर्विदानंददं अन्यत्रोक्तमन्यतोग्राह्यमितिन्यायेनप्रथमंग्रहभावस्पष्टतातेषांवलंचज्ञातव्यं ततोभावसामान्यफलांतरंशुभपापतामित्रग्रहदृष्टियोगादिकंभा

शुकाननसरोरुहाद्गलितमत्रभूमीतलेफलंपरमसुंदरंसकलमाकलय्याधुना ॥
ब्रवीमितनुभावतःप्रवरदैवविंत्तोषदंयदत्रममचापलंकिमपितत्क्षमध्वंबुधाः ॥ १ ॥

वषड्वर्गाःभावेशस्योदयास्तादिकंज्ञातव्यं तदुक्तंपृथुयशसा योयोभावःस्वामिदृष्टोयुतोवासौम्यैर्वास्यात्तस्यतस्यास्तिवृद्धिः पापैरेवंतस्यभावस्यहानिर्निर्दि
ष्टव्याप्रश्नतोजन्मतोवातत्रविशेषोगर्गजातकेनीचस्थोरिपुगेहस्थोग्रहोभावविनाशकृत्उदासीनोग्रहोमध्येमित्रस्वक्षेत्रकोणगःस्वोच्चस्थश्चग्रहोप्येवंभाववृ
द्धिकरःस्मृतः व्ययाष्टषष्ठभावेषुविपरीतफलमाहउशनाचार्यः सौम्याःपुष्टिंपापाविपर्ययसंश्रिताग्रहाःकुर्युः मूर्त्यादिषुनिधनांत्यरिपुभावेव्युत्क्रमात्फल
दाः अन्यच्च सौम्यवर्गाश्रिताभावाःशुभतांप्राप्नुवंतिहि पापवर्गाधिकानिष्टास्तन्वाद्यानात्रसंशयः लग्नलग्नाधिपौस्यातांबलाधिकतरौयदि तत्फलानां

प्र वृद्धिः स्याद्धीनो हानिकरः स्मृतः एवं भावेषु सर्वेषु भावभावेशयोर्बलात् ततो जनुषि वक्तव्या हानिर्वृद्धिश्च कोविदैरिति सर्वार्थचिंतामणौ लग्नादिभावाद्रिपुरंध्र रिःफपापग्रहा रतद्भवनादिनाशः सौम्यास्तु तेषूक्तफलप्रदाः स्युस्तन्वादिकानां फलमेवमाहुः यद्भावनाथो रिपुरंध्ररिःफे दुःस्थानपो यद्भवनस्थितो वा तद्भाव नाशं कथयंति तज्ज्ञाः शुभेक्षिते तद्भवनस्य सौख्यं ॥ २ ॥ तत्तद्भावात्त्रिकोणे वसुखमदनभे चास्पदे सौम्ययुक्ते पापानां दृष्टिहीने भवनपसहिते पापखेटैरयुक्ते भावानां पुष्टिमाहुस्त्वथ च शुभकरी मन्यथा त्वेप्रणाशं मिश्रं मिश्रैर्ग्रहेंद्रैः सकलमपि तथा मूर्तिभावादिकानामिति ॥ १ ॥ अथ त्रिभिः श्लोकैस्तनुभावविषयमाह देहाधीशे

देहाधीशः सपापो व्ययरिपुमृतिगश्चेत्तदा देहसौख्यं न स्याज्जंतोर्निजर्क्षे व्ययरिपुमृतिपस्तत्फलस्यैव कर्ता ॥
मूर्तौ चेत्क्रूरखेटस्तदनु तनुपतिः स्वीयवीर्येण हीनो नानातंकाकुलः स्याद्व्रजति हि मनुजो व्याधिमाधिप्रकोपं ॥ २ ॥

ति देहाधीशः लग्नस्वामी क्रूरयुतः पापग्रहेण युक्तः व्ययरिपुमृतिगः द्वादशषष्ठाष्टमान्यतमस्थानगतश्चेत्तदा जातस्य देहसौख्यं न स्यात् अस्य योगस्य धना दिभावेष्वितिचार्थस्य द्योतनाय प्रथमयुक्तिरिति गम्यते यद्भावनाथो रिपुरंध्ररिःफे तद्भावनाशं कथयंति तज्ज्ञाः इति प्राक्लिखितत्वात् अन्यदाह व्ययेशो व्ययेष ष्ठेशः षष्ठे अष्टमाधीशोऽष्टमे च तत्फलस्यैव कर्ता देहसौख्याभावकर्ता स्यात् अयमर्थो यवन मतेन विरुद्धो यथा बृहज्जातके रिपुभवनपे रिपुस्थे नीरुग्वैरी सुखी कृप णः निधनपतौ निधनस्थे व्यवसायव्याधिवर्जितोऽगुदितः विरोधशमनाय अयमर्थो बोध्यः देहाधीशे व्ययारिमृतिगे सति तद्भवनपे पि तत्रस्थे शुभफलं स्यादि

तिनवाच्यं पूर्वोक्तयोगेसतिव्ययारिपुमृतिपः स्वभवनगतश्चेत्तत्फलस्यैवकर्तेतिवाच्यं योगानामचिंत्यफलत्वादिति अथान्ययोगमाह मूर्ताविति मूर्तौलग्ने
तनुपतिःक्रूरग्रहः क्रूरखेटःलग्नेशःस्वीयवीर्येणहीनःस्वकीयबलाहितश्चेत्तदाजातोमनुजः नानातंकाकुलःअनेकरोगाकुलः व्याधिरोगंआधिप्रकोपंचिंता
व्याप्तत्वंव्रजतिप्राप्नोतिबलत्वंपरपुंग्रहंनीचास्तत्वादिभिर्ज्ञेयं तदुक्तंजातकामृतेस्वोच्चंमूलत्रिकोणंस्वगृहमधिसुन्हृद्देहकंमित्रकंस्यादौदासिनंस्वमृक्षोरिपुभवन
माधिरिपोर्भंचनीचाभिधानं पूर्वेपूर्वेबलीयःपरमपरमिदंहीनसत्वंतदस्मादित्यादिवत्पद्धतिप्रकारमतेन उत्तमबलत्वंसमत्वंहीनबलत्वंचज्ञेयं अल्पेबलेहीनब

अंगाधशिःस्वगेहेबुधगुरुकविभिःसंयुतःकेंद्रगोवास्वीयेतुंगेस्वमित्रेयदिशुभभवनेवीक्षितःसत्वरूपैः॥
स्यान्नूनंपुण्यशीलःसकलजनमतःसर्वसंपन्निधानंज्ञानीमंत्रीचभूपःसुरुचिरनयनोमानवोमानवानां॥ ३॥

लइतिपद्धतिवचनात् ॥ २ ॥ अथशुभयोगानाह अंगाधीशः लग्नेशोलग्नेचेदित्येकोयोगः बुधकविभिर्युक्तोलग्नेशःकेंद्रगइतिद्वितीयः स्वीयेतुंगेस्वोच्चे
अजवृषभमृगांगनाकुलीराझषवणिजौचदिवाकरादितुंगाइत्याद्युक्ते स्वमित्रेस्वमित्रगृहेअथवाशुभभवनेशुभगृहेशुभग्रहेःवीक्षितःलग्नेशइतितृतीयः एषा
मन्यतमयोगेजातोमानवःमानवानांमध्येभूपादिकःस्यात् भूपः भूपालः मंत्रीअमात्यःसर्वसंपन्निधानंसर्वसंपदाश्रयः ज्ञानिभूपत्वाद्युपयुक्तज्ञानवान्सत्व ॥६॥
रूपःसत्वगुणानुरूपः अतश्चपुण्यशीलः सुकृतीसुरुचिरनयनःसुंदरनयनादिशरीरःसकलजनमतःसर्वजनमान्यःपुण्यशीलशब्देनसत्यार्जवादियो

स्यमेतदुक्तंजातकरहस्ये यःसात्विकस्तस्यदयास्थिरत्वंसत्यार्जवंब्राह्मणदेवभक्तिरिति ॥३॥ अथानिष्टयोगत्रयंश्लोकेनाह मेषादिक्रूरेलग्नेक्रूरग्रहराशौलग्नेशःस्थितः अयंएकोयोगः पुष्पवंतौरवींदू क्रूरयोर्ग्रहयोर्मध्येस्थौक्रूरमध्यस्थौक्रूरमध्यत्वंराश्यंशापेक्षयावाज्ञेयं संकोचेप्रमाणाभावात् अयंद्वितीयोयोगः अथ दिनपनिशानाथयोः सूर्याचंद्रमसोः घूनयायीसप्तमगःभौमः बुधः पृष्ठादुदयंअधिगतःपृष्ठोदयराशौस्थितइतितृतीयोयोगः अत्रजातःपुरुषःमनस्वप्रिशस्तमनाइत्यर्थःअंधःदुष्टकर्मापरभवनरतःपरगृहवासरतःपरस्त्रीरतोवास्यात् क्षीणकायःक्षीणशरीरश्चमनस्वित्वंकालगतचंद्रस्यबलत्वे

लग्नेक्रूरेथयातेखलखचरगृहंलग्ननाथेरवींदूक्रूरांतस्थानसंस्थावथदिनपनिशानाथयोर्द्यूनयायी॥
भूमीपुत्रस्तुपृष्ठादुदयमधिगतश्चंद्रजश्चेन्मनस्वीस्यादंधोदुष्टकर्मापरभवनरतःपूरुषःक्षीणकायः ॥४॥

बोध्यं एवंतनुभावस्यशुभाशुभयोगाउक्ताःननुक्वचित्शुभयोगेपिशुभफलंनोपलभ्यतेतथाअशुभयोगेशुभफलंमिति तत्रकोविशेषइतिचेन्सत्यं क्रूरग्रहदृष्टयुतत्वादियोगेनायंभावः शुभयोगकारकग्रहापारक्रूरदृष्टौसत्यांअनिष्टप्राप्तफलंनोपलभ्यते अशुभयोगकर्तारिग्रहोपरिशुभदृष्ट्याशुभफलंनोपलभ्यते वाजिककारैरित्थशालस्यदृष्टिप्रयुतमणऊंयोगेनभंजतंकृतमुक्तं बृहज्जातककारेणनशुभाउदितायोगायथाभवंतिशुभेक्षिताइत्युक्तं इतितनुभावः ॥४॥

अथधनभावफलंश्लोकद्वयेन ब्रुवन्प्रथमेनयोगचतुष्टयमाह कोशाधीशइति कोशाधीशः धनेशः गुरुयुतःस्वराशौस्वेभावेकेंद्रेवाचेत्तदाजातस्यसर्वसंपत्प्र दःस्यात् अथानंतरमन्ययोगउच्यतेइत्यर्थः गुरुयुतोधनाधीशः त्रिकेषुषष्ठाष्टम द्वादशेषुअन्यतमेचेज्जातोमनुजः क्लेशभाक्द्रव्यहीनश्चस्यात् सगुरुः धनाधीशःषष्ठेचेदयंयोगःशिथिलोज्ञेयःतंप्रतिचाल्पधनयोगसद्भावात् धन ाधीशस्यशुभत्वेमध्यधनयोगसद्भावात् तदुक्तंबृहज्जातके लग्नादतीववसुमान्श

कोशाधीशःस्वराशौसुरगुरुसहितःसर्वसंपत्प्रदःस्यात्केंद्रेवाथत्रिकेचेद्भवतिहिमनुजः क्लेशभाक्द्रव्यहीनः ॥स्वांत्याधीशौ त्रिकस्थौकवितनुपयुतौस्यात्तदानेत्रहीनश्चंद्रःपापेनयुक्तोधनभवनगतःशुक्रयुक्नेत्रहीनः ॥५ ॥ शुक्रःसेंदुस्त्रिकस्थोज नुषिनिशिनरःप्राप्नुयादंधकत्वंजन्मांधःसार्कशुक्रस्तनुभवनपतिःस्यात्तदानींमनुष्यः ॥ एवंतातानुजांबासुतनिजगृहिणी स्थाननाथाःस्थिताश्चेदादेद्वयंतत्रतेषांप्रवरमतियुतैरंधकत्वंतदानीं ॥ ६॥

शांकान्सौम्यग्रहैरुपचयगतैःद्वाभ्यांसमोल्पपशुमान्यतदून्यतायामन्येषुसन्स्वपिफलंन्विदमुल्कटेनअथान्ययोगःस्वांत्याधीशौद्वितीयद्वादशाधीशौशुक्रा लग्नेशयुक्तौचेत्तदाजातःनेत्रहीनःअंधःस्यात् अथान्ययोगः शुक्रपापाभ्यांयुक्तश्चंद्रोधनस्थश्चेत्तदाजातोनेत्रहीनइति ॥५॥ अन्ययोगत्रयंतत्रद्वितीययोग स्यतातादिष्वतिदे शंचाह जनुषिजन्मसमयेसेंदुःसचंद्रःशुक्रात्रिकस्थःषष्ठाष्टमद्वादशेषुअन्यतमेचेत्तदाजातोमनुजःनिशिअंधकत्वंप्राप्नुयात् निशांधःस्यात्

सार्कशुक्रः सूर्यशुक्रयुतोतनुभवनपतिः लग्नेशःत्रिकस्थइत्यनुषंगःतदानींजातामिनुजःजन्मांधः जन्मनैवांधःस्यादिति तातादीनांस्थाननाथाः एवंपूर्वो क्तप्रकारेणसार्कैदृशुक्रास्त्रिकस्थाश्चेत्तदानींतेषांतातादीनांअंधकत्वंप्रवरमतियुतैरादेश्यंवक्तव्यं अत्रतातःपिता अनुजःकनिष्ठभ्राता अंबामाता निजगृहि णीभार्या प्रवरमतिशब्देनतातादीनांजन्मन्यपिअंधयोगेज्ञानत्वंसूच्यते इतिधनभावः ॥ ६ ॥ अथभ्रातृसंभवंतत्सुखादियोगानाह भ्रातृस्थानेशभौमै तृतीयाधिपतिभौमौव्ययरिपुनिधनस्थानगौ १२ ६ ८ त्रिकस्थौयदितदाजातःबंधुहीनःसामान्यशब्दनिर्देशेनसहोदरबंधवोविवक्षितास्तैरहितइत्यर्थः

भ्रातृस्थानेशभौमौव्ययरिपुनिधनस्थानगौबंधुहीनःस्वक्षेत्रेसौम्यदृष्टेसहजभवनपेमानवःस्याच्चतद्वान् ॥
केंद्रस्थेबंधुसौख्यंशुभविहगयुतेस्याददभ्रंनराणांपापैश्चेदन्यथैतत्तदनुनिजाधियाज्ञेयमित्थंसमस्तम् ॥ ७ ॥

सहजभवनपेसहजाधिपेस्वक्षेत्रेस्वगृहेसौम्यदृष्टेशुभगृहदृष्टेसतिमानवःतद्वान्बंधुवान्स्यात् सहजाधिपेशुभग्रहयुतेकेंद्रस्थेअदभ्रंबहुबंधुसौख्यंस्यात्कें द्रस्थेसहजभवनेपपापग्रहैर्युतश्चेदन्यथाबंधुसौख्यंनस्यात्युतेदृष्टेइत्युपलक्षणंइत्थंअमुनाप्रकारेणबुद्धिमद्भिर्निजधियास्वबुद्ध्यासमस्तंभावफलंतदनुयो गविचारानंतरंज्ञेयं अयमर्थः योगेसत्यपियोगकर्तृषुभूयसीपापदृष्टिःपापयोगःयोगकर्तृणांनीचास्ततायोगेप्रागुक्तंलक्षणंनस्यात् इतितृतीयोभावः ॥ ७

अथचतुर्थभावफलंवदन्योगचतुष्टयमाह पातालेशःचतुर्थेशःस्वराशौशुभखचरयुतःशुभग्रहयुक्तःसन्भाग्यपेनभाग्यस्वामिनायुक्तश्चेज्जातःसामंतःस्यात् मांडालिकःस्यात् ततोयोगानंतरंलग्नरथःवाहनेशोगुरुणापूर्णदृष्ट्यादृष्टश्चेत्तदाजातःराजपूज्यःराजकृतसन्मानभाजनंस्यात् तदनुगुरुदृष्टःसुखेशःलाभगश्चेत् यद्वागुरुदृष्टःसुखेशःयानंपश्यन्भवतितदानराणामभिमतंवाहनानांनिवहंसमूहंप्रदत्ते इदंयोगद्वयंवाशब्दप्रयोजकेपिज्ञेयं अन्ययोगलाभाच्चतुर्थं

पातालेशःस्वराशौशुभखचरयुतोभाग्यनाथेयुनक्तःसामंतःस्यात्ततश्चेत्सुरपतिगुरुणावाहनेशस्तनुस्थः॥
संदृष्टोराजपूज्यस्तदनुचहिबुकाधीश्वरोलाभसंस्थोयानंपश्यन्नराणांनिवहमभिमतंवाहनानांप्रदत्ते ॥८॥
स्वक्षेत्रेतुर्यनाथस्तनुपतिसहितःस्यादकस्माद्गृहाप्तिःसौहार्दिवासुत्वाद्भिस्तदितरगृहगश्चेद्गृहालभ्ययोगः॥
यावंतःपापखेटाधनदशमगृहप्रांत्यपैश्चत्रिकस्थायुक्तास्तावत्प्रमाणाज्ज्वलनवशगताःक्लेशदाःस्युर्गृहानुः ॥९॥

दृष्टिविरहात्योगप्रभावप्रसंगात् ॥ ८ ॥ अथगृहप्राप्त्यादियोगानाह लग्नेशसहितश्चतुर्थभावनाथःस्वक्षेत्रेचतुर्थभवनेचेत्तदाजातस्यअकस्मात्अयत्नतोगृहाप्तिःगृहलाभःस्यात् तथासुन्हाद्भिःहितकारकैर्जनैःसौहार्दप्रीतिमज्जनयुक्तंगृहादिस्यादित्यर्थः तनुपतियुक्तःचतुर्थनाथः तदितरगृहगः चतुर्थभवनादन्यभवनस्थश्चेत्तदागृहालभ्ययोगःगृहप्राप्त्यभावः यावंतःक्रूरग्रहाः द्वितीयदशमचतुर्थद्वादशनाथैःसहिताःत्रिकस्थाःतावंतोगृहाःजातस्यनुः

नरस्यवन्हिवशगतादग्धाःअतएवक्लेशदाःस्युः अत्रधनेशादीनांचतुर्णांसमुदितानामेकयोगोनविवक्षितः त्रिकभवनेयोवाप्रांन्यसद्भावेसावकाशत्वात् ९
अथवाहनविरामयोगौतच्छांतिकरणंचाह क्रूरइत्यनुषंगः यावंतःपापग्रहाःवाहनस्थाःचतुर्थस्थाःशुभाविहगदृशांगोचरानोभवेयुः शुभग्रहदृष्टानस्युः
तावंतः नृणांपरमगुणवतांप्रकृष्टगुणयुक्तानांवाहनानांविरामाःविनाशाःस्युः अथद्वादशाष्टमगताःक्रूराःयावंतइत्यनुषंगश्चतुर्थंपश्यंतिचेत्तदापंडितैस्त

यावंतोवाहनस्थाःशुभविहगदृशांगोचरानोभवेयुस्तावंतोवाविरामाःपरमगुणवतांवाहनानांनृणांस्युः॥ क्रूराःपश्यंतियानंव्य
यनिधनगताश्चेत्तदातद्वदेवप्राज्ञैरादेश्यमेषांखलुशुभकरणंशांतिकंवाहनानां ॥ १० ॥ विद्यास्थानाधिपोवाबुधगुरुसहि
तश्चेत्त्रिकेवर्तमानोविद्याहीनोनरःस्यादथनवमनिजक्षेत्रकेंद्रेषुतद्वान् ॥बालत्वंवृद्धतावायदिगगनसदांजन्मकालेतदास्यात्प्र
ज्ञामांद्यंनराणामथयदिविहगःस्वर्क्षगोदोषहृत्स्यात् ॥ ११ ॥

द्वदेवदृष्टिक्रूरग्रहेसंख्याप्रायत्ववाहनानांविरामाःस्युरित्यर्थः तत्रवाहनानांशुभकरणंशांतिकंप्राज्ञैःआदेश्यंविधेयमितिविशेषः इतिचतुर्थभावः ॥ १०
अथपंचमभावफलं निरुपायनविद्याबुद्धियोगानाह विद्यास्थानाधिपःपंचमेशःकेवलोवाबुधगुरुसहितोवात्रिकेवर्तमानश्चेत्तदाजातोविद्याहीनः त्रिकस्थेपंच
मेशेबुधगुरुयोगेविद्याद्यनुकूलेनास्तीतिवाशब्देनद्योतितं अथपंचमेशःपंचमनवमकेंद्रेषुस्थितश्चेत्तदाजातःविद्यावान् बुधगुरुयोगेविद्यावत्त्वंकिमुतवक्त

व्यमितिगम्यते अथजन्मकालेप्रज्ञायोगकर्तॄणांगगनसदांग्रहाणांबालत्वंवृद्धतावायदितदाजातानांप्रज्ञामांद्यं अल्पबुद्धिःस्यात् यदिबालोवृद्धोवाग्रहः स्वक्षेत्रगःतदादोषहृत् प्रज्ञामांद्यत्वप्रयोजकदोषंदूरीकुर्यादित्यर्थः ॥११॥ अथमूकत्वसंतानाभावयोगानाह वाक्स्थानेशःपंचमेशोगुरुर्वाव्ययरिपुविलयस्थानगःत्रिकस्थश्चेत्तदावाग्विहीनःमूकःस्यात् अथपित्रादिमूकतायोगमाह एवंप्रकारेणपित्रादिभावानांदशमभावादिराशीनांपतयस्ताभ्यांपंचमेश

वाक्स्थानेशोगुरुर्वाव्ययरिपुविलयस्थानगोवाग्विहीनश्चैवंपित्रादिकानांपतयइहयुतामूकतास्याच्चताभ्यां ॥ वागीशात्पंच
मेशास्त्रिकभवनगतःपुत्रधर्मांगनाथारंध्रेद्वेष्यांतिमस्थायदिजनुषिनृणामात्मजानामभावः ॥ १२ ॥ किंचित्कालंविलंबः
शुभखगसहितास्तेथकर्कैसुतर्क्षेचंद्रेकन्याप्रजावान्भ्रमिततनयवांश्चाथदेवेंद्रपूज्यात् ॥ क्रूरश्चेत्पंचमस्थःसुतभवनगतःस्या
त्तदापत्यहीनश्छायापुत्रःस्वगेहाद्यदिभवतिसुतेसूनुरेकस्तदानीं ॥ १३ ॥

गुरुयुताःत्रिकेतिष्ठंतिचेत्तदातातादीनांमूकत्वंस्यात् आदिशब्दात्भ्रातृमात्रादयोज्ञेयाः अथजन्मनिजीवात्जीवाधिष्ठितराशेःपंचमेशःत्रिकस्थःपुत्रधर्मांगना
थाःपंचमनवमलग्नेशाःजन्मलग्नात्त्रिकस्थाःयदिस्युःतदापुत्राणामभावोवाच्यः ॥ १२ ॥ अथसंतानयोगमाह तेपुत्रधर्मांगनाथाःशुभखगसहिताश्चेत्त

दासंतानोत्पत्तौकिंचित्कालंविलंबःस्यात् शुभग्रहमहादशांतर्दशाबलापेक्षयाविलंबइतिभावः अथकर्कराशौपंचमभावेचंद्रश्चेत्तदाकन्याप्रजावान् अथवा प्रमिततनयवान् स्वल्पापत्यःस्यात् अथदेवेंद्रपूज्यात् जीवात्पंचमस्थःक्रूरश्चेत् जीवोपिलग्नात्पंचमगस्तदापत्यहानिःसंतानरहितःस्यात् यदिस्वगेहात्स्वराशितःपंचमेछायापुत्रःशनिश्चेत्तदाएकपुत्रःस्यात् अत्रसंपूर्णदृष्ट्याशुभकृतस्यशनेःस्वराशेःपुत्रभवनेदृष्ट्यानेकपुत्रयोगस्तदारविभौमयोःस्वगेहात्पंचमस्थयो

कुंभेचेत्पंचपुत्रास्तदनुचमकरेनंदनेप्यात्मजाःस्युस्तिस्रोभौमः सुतानांत्रितयमथसुतादायकोरौहिणेयः ॥
इत्थंकाव्यःशशांकोजनुषिचगुरुणाकेवलेनैवपुत्राःपंचस्युःकेतुराव्होःक्रियवृषभवनेकर्कटेनोविलंबः॥१४॥

रेकपुत्रत्वंकिमुतवक्तव्यमितिगूढोभिप्रायः ॥ १३ ॥ अथान्ययोगानाह नंदनेपंचमभावेकुंभेछायासूनुरित्यनुषंगः यदितदापंचपुत्राः स्युः मकरेआत्मजाः तिस्रःमकरस्यस्त्रीराशित्वादितिभावः भौमेमकरेचेदित्यनुषंगः सुतानांत्रयंस्यात् अथरौहिणेयः बुधःपंचमेसुतादायकः कन्याप्रदः इत्थंशुक्रश्चंद्रोपिपंचमे सुतादायकः एवंकेवलेनग्रहयोगरहितेनपंचमस्थेनगुरुणापंचपुत्राःस्युःपंचनेमेषेवृषेकर्केवाकेतुराव्होरेकतरेसतिनोविलंबःसंतानोत्पत्तौप्रतिबंधोनभवती त्यर्थःनोविलंबइत्यनेनसूचितंमकरकुंभातिरिक्तराशौपंचेमशनौमकरमंतरेणतत्रस्थेभौमेक्रियादेराशीन्विहायपंचमेराहौवाकेतौसंततोर्विलंबएवेति ॥१४

न नुकतिवर्षाणिविलंबइत्याह पापग्रहोजीवोवाचतुर्थस्थः पंचमेषष्ठेवाचंद्रःभवतितर्हिखगुणमितसमातुल्यःत्रिंशद्वर्षमितःप्रबंधः संततेरित्यनुषंगः प्रकृष्टोबंधः शुभग्रहदृष्ट्याविमुक्ताः यावंतःपंचमस्थाःक्रूरग्रहाःस्युःबलाधीनफलाः खगाइत्युक्तप्रकारैःस्थानदिगादिबलरूपकैःकितदितिध्येयंतावद्वर्षप्रमाणःसंततेर्निश्चयेनविलंबःस्यादित्यर्थः ॥१५॥ अथप्रतिबंधकभंजकंसंतानोपायमाह तत्प्राप्तिःसंततिप्राप्तिःधर्ममूलाश्रुतिस्मृतिविधिगतोधर्मःमूलंहेतुर्यस्याः

पापोवावासवेज्यःसुखभवनगतःपंचमेवाष्टमेवाशीतांशुःसंततेःस्यात्खगुणमितसमातुल्यएवप्रबंधः ॥ यावंतःपापखेटा
स्तनयगृहगताःसौम्यदृष्ट्याविमुक्तास्तावद्वर्षप्रमाणोनियतमिहभवेत्संततेर्वाविलंबः ॥ १५ ॥ तत्प्राप्तिर्धर्ममूलातदनुबुध
कवीशंकरस्याभिषेकाच्चंद्रश्चेत्तद्वदेवात्रिदिवपतिगुरुर्मंत्रयंत्रौषधीनां ॥ सिद्ध्यामंदारसूर्यायदिशिखितमसीतत्रवंशेशपू
जाकार्याम्नायोक्तरीत्याबुधगुरुनवशःक्षिप्रमेवात्रसिद्धिः ॥ १६ ॥

सातथा आदित्यसप्तमीव्रतशंकराराधनसंतानगोपालमंत्रजपहरिवंशश्रवणादिविहितधर्ममूलेतिभावः अत्रविशेषः तदनुतत्पश्चाद्बुधकवीविलंबप्रयोजकौ चेत्शंकरस्याभिषेकाद्रुद्राध्यायोक्तमंत्रकरणकाभिषेकात्तत्प्राप्तिरित्यनुषंगः चंद्रश्चेत्पूर्ववज्ज्ञेयं गुरुश्चतथातदायंत्रौषधीनांसिद्ध्या सिद्धिशब्दःयंत्रादिभिः प्रत्येकंसंबध्यते यंत्रसिद्ध्याऔषधसिद्ध्येतिमंत्राचरणेनयंत्रग्रंथोक्तानियंत्राणिसंतानगोपालमृत्युंजयादीनि औषध्यःलक्षणाद्यास्तासांसिद्धिः

त्रिधिवदनुष्ठानसाध्यफलेत्यर्थः शनिभौमसूर्यराहूणांमध्येकस्यचित्प्रतिबंधकश्चेतत्रवंशेशपूजाकुलदेवतापूजनं आम्नायोक्तरीत्याकार्या आम्नायशब्दः वेदस्मृतिपुराणाद्युपलक्षणः तत्रापिविशेषः बुधगुरुनवमस्थानपाः प्रतिबंधकाश्चेद्धर्मानुष्ठानात्शीघ्रमेवासिद्धिःस्यादिति इतिपंचमभावः ॥१६॥ अथरि पुभावफलंवक्तुकामस्तावत्व्रणरोगानाह पापग्रहयुतेषष्ठेशेलग्नाष्टमगतेसतितनुःमनुजस्यशरीरेव्रणाःस्युः इत्थमुक्तप्रकारेणजनित्र्यादिभावानामीशेपाप

षष्ठेशेपापयुक्तेतनुनिधनगतेनुःशरीरेव्रणाःस्युश्चादेश्यंतज्जनित्रीजनकसुतवधूबंधुमित्रादिकानां ॥ इत्थंतत्स्थानगामी शिरसिदिनमणिश्चाननेशीतभानुःकंठेभूमीतनूजोहृदिशशितनयोवाक्पतिर्नाभिमूले ॥ १७ ॥ नेत्रेपृष्ठेचशुक्रोदिनक रतनयःस्यात्पदेचाधरेचेत्केतुर्वासैंहिकेयस्तदनुतनुपतिर्भौमविक्षेत्रसंस्थः ॥ आभ्यामालोकितःसन्भवतिहिकतिचि त्स्थानगोवातदानींनेत्ररोगीनरःस्यात्प्रवरमतियुतैर्होरिकैर्ज्ञेयमेवं ॥ १८॥

युक्तेतनुनिधनगतेतेषांव्रणाःस्युः इत्यादेश्यंवक्त व्यंअंगविशेषव्रणानाह तत्स्थानगामीतनुनिधनगतः षष्ठेशोदिनमणिःसूर्यश्चेत्शिरसिव्रणः चंद्रश्चेन्मुखे भौमश्चेत्कंठे बुधश्चेत्हृदये वाक्पतिश्चेन्ना भिमूलेव्रणाःस्युः ॥१७॥ शुक्रश्चेन्नेत्रमूलेपृष्ठेचशनिश्चेत्पदेचरणे राहुःकेतुर्वाअधरेव्रणाः स्युः इत्याग्रिमश्लोकेनान्वयः अथनेत्रव्याधियोगः तदनुभौ मवृषराशिस्थोलग्नेशः भौमबुधदृष्टः कतिचित्स्थानगोपिवायत्रकुत्रवास्यात्तदानींनातःनेत्ररोगीस्यात् प्रवरमतियुतैर्होरिकैरेवंज्ञेयं ॥ १८ ॥

अथान्ययोगः षष्ठभावाधिपेलग्नस्थेजातःशत्रुहंतास्यात् धनस्थेषष्ठेशेपुत्रात्तार्थः पुत्रेणात्तःगृहीतःअर्थोधनंयस्यसपुत्रन्हृतधनइत्यर्थः अतिदुष्टश्चस्या
त् सहजभवनगेग्रामस्यदुःखकरः नाभौरागीचस्यात् लग्नाष्टमपतीषष्ठस्थौनापुरुषःनेत्ररोगीस्यात् अंगेवामेतरशब्दोपादानात् अत्रवामइतिगम्यते



षष्ठेशेलग्नयातेभवतिहिमनुजोवैरिहंताधनस्थेपुत्रात्तार्थोतिदुष्टःसहजभवनगेग्रामदुःखाकरःस्यात् ॥ नाभिस्थानेचरोगीत
नुनिधनपतीशत्रुभावस्थितौनानेत्रेवामेतरेस्यादसुरकुलगुरुःसर्यजस्त्वंघ्रिरोगी ॥ १९ ॥ दंतेदंतछदेवाकुमुदपतिरिपुः
संस्थितःषष्ठभावेकेतुर्वालग्ननाथःकुजबुधभवनेसंस्थितःक्वापिदृष्टः ॥ स्वेनप्रत्यर्थिनावाभवतिजनुषिचेदासनाधेसरोगस्तौ
भूमीसूर्यपुत्रौयदिरिपुगृहगौतद्भवःस्याद्गदोनुः ॥ २० ॥

शुक्रःषष्ठेष्टमेइतरेदक्षिणनेत्रेरोगी शनिःषष्ठेचरणरोगीस्यात्॥१९॥ अथान्ययोगःराहुकेतू शत्रुभावेचेद्दंतेदंतछदेओष्ठेवारोगीस्यात् भौमबुधराशिस्थि
तोलग्नेशःस्वेनस्वशत्रुणापूर्णदृष्टःयत्रकुत्रापिस्यात्तदाआसनाधेगुदसमीपेअर्धांगेवारोगीस्यात् यदितौभूमिसूर्यपुत्रौभौमशनीरिपुगृहगौषष्ठभावसंस्थौचे ॥११॥
त्तदातद्भवः नुःपुरुषस्यगदोरोगःस्यात्भूमिपुत्रेरुधिरविकारः शनावितरविकारः स्यादित्यर्थः ॥ २० ॥

तथाप्रालेयांशौ चंद्रे खलखगसहिते पापग्रहयुक्ते शत्रुभावस्थे सति रोगवान्स्यात् क्रूरैर्निष्पीडिते शनिप्रभृतिभिः क्रूरग्रहैर्योगेन दृष्ट्या वा पीडितः तनुसदनगतः लग्नगः तस्मिन् शीतकरश्चंद्रश्चेत्तद्वान्रोगी स्यात् शुभग्रहदृष्टिरहितः केंद्रगः क्रूरश्चेद्रोगवान्स्यात् तस्मिन्क्रूरे शुक्रराशिसंस्थे कुजशुक्रगुरुभिर्न दृष्टे तद्वदेव

प्रालेयांशौ रिपुस्थे खलखगसहिते मानवो रोगवान्स्यात्क्रूरैर्भिः पीडितश्चेत्तनुसदनगतः शीतरश्मिस्तदानीं ॥ क्रूरे केंद्रालयस्थे यदि शुभविहगैर्नेक्षिते रोगवान्स्यात्तस्मिन्काव्यालयस्थे कुजगुरुकविभिर्नेक्षिते तद्वदेव ॥ २१ ॥ पुंलग्ने स्त्रीयतुंगे रिपुभवनगतौ वीक्षितेस्तन्नभोगैरंगे नूनं नराणामरिजनवशतः स्याद्गदो गूढरूपः ॥ रिःफस्थाने स्थिते चेदरिसदनपतौ सिंहिकापुत्रयुक्ते किंवा सप्ताश्वयुक्ते परगृहवसतिर्नीचवृत्तिर्नरः स्यात् ॥ २२ ॥

रोगवानेव स्यात् अत्र यद्यपि विशेषो नोक्तस्तथापि योगकर्तृगृहस्वामिकफवातपित्तादिकोपजन्यो विशेषरोगो ज्ञेयः॥ २१॥ षष्ठेशे पुंराशिलग्ने स्वोच्चे वा पापग्रहैर्दृष्टे सति नराणां जातानां अंगे शरीरे अरिजनवशतः शत्रुजनकारितः गूढरूपः प्रच्छन्नः गदो रोगः स्यात् अत्र ग्रहतुंगराशीनां प्रायः स्त्रीराशित्वात् पुंलग्नेत्याशङ्कः प्रयोगे भिन्न एव योगो ज्ञायते षष्ठेशे राहुयुक्ते यद्वा सूर्ययुक्तः द्वादशे वा स्थितः तदा जातः नरः परगृहवासी नीचवृत्तिश्च स्यात् ॥ २२ ॥

अथसप्तमभावफलंनिरूपयिष्यन्नादौविवाहयोगमाह यावंतोधिकबलाग्रहाःसप्तमस्थाःसप्तमेशेन दृष्टाः तावंतोविवाहाःनुःपुरुषस्यज्ञेयाःसुमतिमता।जन्मलग्नाभि
ज्ञेनदैवज्ञेन एवमुक्तप्रकारेणकुटुंबेजनकभ्रातृनादौज्ञेयं होरागमज्ञैर्जातकशास्त्रविद्भिरधिकबलवतांग्रहाणांबलयोगाद्विचारःकार्यः तत्राधिकबलंरविविधुकुभ
वांरविसूर्यचंद्रभौमानांअंगदिक्शैलसंख्यमादेश्यंसूर्यस्यषट्रूपाणिचंद्रस्यदशरूपाणिभौमस्यसप्तरूपाणि अन्येषांषट्रूपाण्येव अंगरूपाधिकोबलीतिपद्ध

यावंतोवाविहंगामदनसदनगाश्चेन्निजाधीशदृष्टास्तावंतोनुर्विवाहास्त्वथसुमतिमताज्ञेयमित्थंकुटुंबे ॥ कार्योहोरागमज्ञैरधि
कबलवतांखेचराणांहियोगादादेश्यंतत्रवीर्यैरविविधुकुभुवामंगादिक्शैलसंख्यं ॥ २३ ॥ केंद्रस्थावात्रिकोणयदिखलु
गृहिणीकारकाख्यानभोगाःकामार्थेशौनिजक्षेपरिणयनविधिःस्यात्तदानींनुरेकः ॥ जायाधीशःकुटुंबाधिपतिरपियुतश्चे
त्रिकेगर्हिताख्यैर्यावद्भिःशुक्रयुक्तोनियतमिहभवेत्तावतीनांविरामः ॥ २४ ॥

तिवचनात्॥२३॥गृहिणीकारकाःसप्तमभावेशुभग्रहाःशुक्रेंदुजीवशाशिजैःसकलैस्त्रिभिर्वाद्वाभ्यांकलत्रभवनेचतथैककेन एषांगृहेपिचगणेपिविलोकितेवासं
तिस्त्रियोमदनभावपतिस्वभावाइतिकल्याणवर्मवचनात् एतेकेंद्रस्थाःवात्रिकोणेस्युः तथासप्तमद्वितीयपतीस्वभवनेस्यातां तदाजातस्यनुःपुरुषस्यपरिणय
नविधिः विवाहएकःस्यात् सप्तमभावाधीशःद्वितीयाधिपोवाशुक्रयुक्तः यावद्भिःक्रूरग्रहैर्दृष्टः सहितःत्रिकेस्यात् तावतीनांस्त्रीणांविरामोनाशःस्यात् ॥२४॥

अथगर्भभावयोगानाह सप्तमस्तौसूर्येलग्नस्थेशनौसप्तमस्थेएकोयोगः अथसूर्यशनीसप्तमे गुरुदृष्टिरहितश्चंद्रोदशमेइतिद्वितीयोयोगः अत्रनारी नोप्रसूते द्वेष्येशः शत्रुभवनस्वामी तथामित्रमंदौरविशनीचद्विषिषष्ठे बुधेनदृष्टः सितकिरणश्चंद्रोस्तेसप्तमेअयंतृतीयोयोगः अत्रनारीनोप्रसूते कुज शनीषष्ठेचतुर्थेयदितदाजातस्यनारीगर्भिणीनस्यादितिचतुर्थोयोगः इतिसप्तमभावः ॥ २५ ॥ अथाष्टमभावः कष्टकर्मकरादियोगनाह शुक्रगुरुबुधा

लग्नस्थेसप्तसप्तौदिनमणितनयेकामगेवार्कमंदौद्यूनेचंद्रेनभस्थेनचयदिगुरुणालोकितेनोप्रसूते ॥ द्वेष्येशोमित्रमंदौद्विषिसि
ताकिरणेऽस्तेबुधेनेक्षितेनोसूतेद्वेष्येजलक्षेयदिकुजरविजौगर्भिणीस्यान्ननारी ॥ २५ ॥ रंध्रस्थानस्थितावास्थिरभवनगता
शुक्रवागीशसौम्याः कृच्छ्राणांकर्मणांनाभवतिहिनियतंकारकः स्तब्धभावः ॥ बाल्येदुःखीनरः स्यान्निधनगृहपतौलाभ
यातेसुखीस्यात्पश्चात्पापेल्पमायुः शुभखगसहितेदीर्घमायुर्नराणां ॥ २६ ॥

अष्टमस्थाः स्थिरराशिगतावातदाजातः नापुरुषः नियतंनियमेनकष्टकर्मणांकर्तास्यात् स्तब्धभावः कठिनचित्तश्चस्यात् अष्टमभावेशेलाभगेबाल्येबाल्या वस्थायांदुःखीपश्चात्सुखीस्यात् लाभगेष्टमेशेपापेअल्पायुःस्यात् तस्मिन्नेवशुभग्रहयुक्तेजातानांदीर्घमायुःस्यात् ॥ १३ ॥

आयुर्गृहेशः अष्टमपतिः क्रूरयुक्तः षष्ठद्वादशगतः तदा ऽल्पमायुः कुर्यात् अष्टमपतिः लग्नेशयुक्तः अरिप्रांत्यसंस्थः इत्यनुषंगः तदा स्वल्पमायुः प्रदत्ते अष्टमेशः रंध्रस्थो वा चिरायुः प्रदत्ते अष्टमेशः तदनु रविभुवो वा तत्राष्टमे तद्वत् चिरायुः प्रदत्ते लयेशः अष्टमेशः कोशस्थानास्थितः द्वितीये स्थितश्चेत्तदा तस्करो वैरियुक्तश्च स्यात् ॥२७॥ प्रसूतौ जन्मसमये आयुर्देहाधिनाथौ अष्टमलग्नपती हीनवीर्यौ अष्टमषष्ठगतौ तदा संग्रामे कीर्तिशेषं प्राप्नोति संग्रामाभिमुखो युद्धं विहाय पं

कुर्यादायुर्गृहेशः खलखगयुगरिप्रांत्यसंस्थोल्पमायुश्चेल्लग्नाधिशियुक्तो निधनभवनपः स्वल्पमायुः प्रदत्ते ॥ रंध्रस्थो वा चिरायुस्तदनु रविभुवस्तत्र तद्वल्लयेशः कोशस्थानस्थितश्चेज्जनुषि हि मनुजो वैरियुक्तस्करः स्यात् ॥ २७ ॥ आयुर्देहाधिनाथौ निधनरिपुगतौ हीनवीर्यौ प्रसूतौ संग्रामे कीर्तिशेषं व्रजति बलयुतौ तौ तदा तज्जयाप्तिं ॥ शुक्रेणांदोलिकायास्तनुपविधुयुतो वाहनस्थाननाथो मूर्तौ दंतावलेंद्रै रथगुरुसहितः स्याज्जयो वाजिवाहैः ॥ २८ ॥

चत्वं प्राप्नोतीत्यर्थः तावेवायुर्देहाधिनाथौ सबलौ चेद्विजयी भवति चतुर्थेशः शुक्रेण युतश्चेत् आंदोलिकायाः शिबिकायाः जयः शिबिकारूढो जयतीत्यर्थः चतुर्थेशः लग्नेशेन चंद्रेण च युतः मूर्तौ लग्ने स्थितश्चेत्तदा दंतावलेंद्रैः महागजैः जयः स्यात् अथ चतुर्थेशो गुरुयुतः लग्ने चेत्तदा वाजिवाहैः वाजिराजैः गजेंद्रैश्च सहजयः स्यात् इत्यष्टमभावः ॥२८॥

अथनवमभावः शुभयोगमाह नवमभावेशोगुरुदृष्टःलग्नस्थश्चेत्तत्रजातोराजवंद्यःराजमान्यःस्यात् भाग्येशः नवमाधिपःलग्नस्थः चतुर्थनवमपतीस्व भवनंचतुर्थपतिःचतुर्थनवमपतिर्नवमंपूर्णदृष्ट्यापश्यतश्चेत्तदासर्वासांधनधान्यसुवर्णादिसंपदांआस्पदंआश्रयःमनुजःस्यात् वाहनेशःअष्टमस्थस्तदामनुजःभाग्यराहित्यंत्रजाति होराविद्भिरेवंप्रकारेणभाग्यराहित्यंनुःहीनानांशुभलक्षणवयोबलादिरहितानांवाहनानांप्राप्तिस्तदनुचपलतास्थिरताचज्ञेयेन्य

भाग्येशोमूर्तिवर्तीसुरपतिगुरुणालोकितोभूपवंद्योलग्नस्थोवाहनेशोनवमपतिरुभौपश्यतश्चेत्स्वगेहं ॥ सर्वासामास्पदंस्यान्मनुजइहतदासंपदांवाहनेंद्रोरंध्रस्थानास्थितश्चेत्त्रजातिहिमनुजोभाग्यराहित्यमेव ॥ २९ ॥ हीनानांवाहनानांतदनुचपलताप्राप्तिरेवंनराणांज्ञेयाहोरागमज्ञैरथनवमपतौलाभगेराजवंद्यः ॥ दीर्घायुर्धर्मशीलस्तदनुधनवपुर्वाहनेशःस्वगेहेधर्मशीलप्रवर्तीजनुषियदिगजस्वामिसिंहासनानां ॥ ३० ॥

ग्रिमेणसंबंधः ॥ २९ ॥ अथनवमेशोलाभगेराजमान्यःदीर्घायुर्धर्मशीलश्चस्यात् तदनु जनुषिधनवपुर्वाहनेशाःद्वितीयलग्नचतुर्थपतयःस्वगेहे लग्नेशोलग्ने धनेशोधनेवाहनेशोवाहनेशश्चतुर्थभवनेइत्यर्थः धर्मेशालग्नगतोयदितदागजस्वामिसिंहासनानांप्राप्तिरित्यनुषंगः तत्रगजाःहस्तिनःस्वामिसिंहासनानांराजाधिष्ठेयसिंहासनंराज्यकार्येषुभद्रासनंतेषांप्राप्तिःस्यात् ॥ ३० ॥

अमीषामुक्तवक्ष्यमाणानांयोगानांयोधिपः योगकर्तायोग्रहः अधिकबलयुतस्तस्यदशायांअंतर्दशायांलब्धिःयोगफललाभःस्यात् अथगुरुशुक्रौवाहनेश युतौसंतौकेंद्रे अयनेआगमेएकादशेइत्यर्थः त्रिकोणेस्यातामित्येकोयोगः अथगुरुशुक्रयुतोभाग्याधीशः भाग्येचतुर्थेवास्यात्तदाद्वितीयोयोगः अत्रयोग द्वयेजातःवाहनव्यूहानांसमुदायानांनाथः ईशोनरपतिःस्यात् ॥३१॥ अथचिंतायोगः भौमेकर्मस्थेक्षेत्रचिंताकर्षणबीजवापक्षेत्रसंस्कारादिप्रकारकक्षे

योगानांस्यादमीषांप्रचुरबलयुतोयोधिपस्तद्दशायांलब्धिश्चांतर्दशायामथगुरुभृगुजौवाहनाधीशयुक्तौ ॥ केंद्रेयानेत्रिको णेत्वथगुरुकवियुग्वाहनस्थानगोवाभाग्याधीशःस्वराशौभवतिनरपतिर्वाहनव्यूहनाथः ॥ ३१ ॥ कर्मस्थेक्षेत्रचिंतात्रिक भवनगतेसौख्यचिंतामहीजेवागीशेयानभूषावसनहयभवाचामरच्छत्रचिंता ॥ प्रालेयांशौसितेस्यादथमदनगतेवाक्पतौपुत्र चिंतासंतानस्थानयोर्तहिमकरतनयेबुद्धिजायत्रिकोणे ॥ ३२ ॥

त्रचिंताइत्यर्थः त्रिकभवनगतेषष्ठाष्टमद्वादशेमहीजेसौख्यचिंतासकलविषयप्रयुक्तसौख्यचिंतास्यादित्यर्थः वागीशेत्रिकस्थेवाहनभूषणवस्त्राश्वभवाचिंता स्यात् चंद्रेसितेवात्रिकस्थेचामरछत्रचिंतातत्प्राप्तौरक्षणेचचिंतास्यात् अथवाक्पतौगुरौसप्तमस्थेपुत्रचिंतापुत्रविषयकयोगक्षेमादिचिंतेत्यर्थः बुधेपंचमेबु द्धिजाचिंता सूर्येत्रिकोणस्थेपितुर्बांधवस्यचाचिंता शुक्रेसुतनवमसप्तमगेयात्राचिंताअथगुरौनवमपंचमेपुत्रजापुत्रभवाचिंतास्यात् चिंतानामयेषांजनानां

क्षेत्रादिसंभवस्तेषांतद्विषयलाभाशुभानुकूल्यप्रातिकूल्यादिसंस्मृतिः इतिनवमभावः ॥३२॥ अथदशमभावफलमर्थेनाह जनुषिकर्मभावेशोविवीर्योनिर्बल श्चेत्तदा जातः सर्वकर्मास्पदंसर्वकर्मणामास्पदंस्थानंनोभवति सर्वकर्मसाधकोनस्यात् अर्थात्तुजनुषिकर्माधीशोबलीचेन्सर्वाणिकर्माणिसाधयेदित्यर्थः य दाशुभग्रहयुतोदशमाधीशः स्वीयगेहेदशमेचेत्तदाजातोमानवोमानशीलोमानीभवेत् ॥३३॥ अथदीर्घमध्यायुर्योगानाह यदानृणांजन्मसमयेलग्नाष्टमदश

मार्तंडेतातबंधोरथसुतनवमद्यूनगेदानवेड्येयात्राचिंतानराणामथनवमसुतेपुत्रजावासवेड्ये।।कर्माधीशोविवीर्योयदिजनुषित दासर्वकर्मास्पदंनोगेहेस्वीयेयदासौशुभविहगयुतोमानवोमानशीलः ।।३३।। लाभेकेंद्रत्रिकोणेतनुनिधनभवस्थानगाःसं स्थिताश्चेद्दीर्घायुःपापखेटाःपणफरहिबुकत्रिस्थितामध्यमायुः ।। हीनायुःप्रोक्तमेतेयदिजनुषिनृणांस्युस्तदापोक्लिमस्थारं ध्रस्थानस्थितानांतनुपतिगगनस्वामिसूर्यात्मजानां ।। ३४ ।।

मेशाःलाभेकेंद्रेत्रिकोणेचस्थिताश्चेद्दीर्घायुःस्यात् पापग्रहाःपणफरचतुर्थतृतीयस्थिताःमध्यमायुःस्यात् एतेपूर्वोक्ताआपोक्लिमस्थाश्चेदल्पायुःस्यात् द्वात्रिं शद्वर्षादर्वाक्हीनायुः ततोमध्यायुः चतुःषष्ट्यनंतरंदीर्घायुर्ज्ञेयं लग्नेशदशमेशशनीनांअष्टमस्थानस्थितानांमध्येयोहीनःहीनबलस्तस्यदशापर्यंतमायुः स्यादित्युत्तरेणसंबंधः ३४॥

अथधर्मकर्मात्मजेशाः नवमदशमपंचमेशाः स्वभवने नवमादिकेस्युस्तदातेषांयोधिकबलस्तस्यदशायांजातस्यधर्मबुद्धिःस्यात् अन्यथापरभवनेयदातेषां योधिकबलस्तद्दशायांधर्महानिःस्यादित्यर्थः लग्नाष्टमपतीयदिशनिराहुकेतून.मन्यतमेनयुतौषष्ठस्थौतद्दशायांतनुनिधनपत्योराधिकबलस्यदशायांव्रणाः स्युः ॥ ३५ ॥ चतुर्थेशस्तत्रषष्ठभावेचेत्तदायानहेतुर्मृतिःस्यात् चौराच्छस्त्रेणचमृतिः तत्रेतिअरिभावपरामर्शेनयानेशस्यशन्यादियोगेवक्ष्यतेअयमर्थः

योहीनस्तद्दशायुस्त्वथनिजभवनेधर्मकर्मात्मजेशाश्चेत्स्युस्तेषांदशायांबहुलबलवशाद्धर्मबुद्धिर्नराणां॥ हानिःस्यादन्यथारौ तनुनिधनपतीभानुपुत्रेणयुक्तौस्यातांस्वर्भानुनाचेत्तदनुचशिखिनातद्दशायांव्रणाःस्युः ॥३५॥ यानेशस्तत्रसंस्थोयदिभवति तदायानहेतुर्मृतिः स्याच्चौराच्छस्त्रेणचिंतानवमभवनतोभाग्यजाताविधेया ॥ व्योम्नीभूपालभूषावसनहयमहत्कर्मणांप्राप्ति चिंतालाभस्थानेखिलानांव्ययनिधनगृहात्कल्मषाणांविधेया ॥३६॥

शनियोगेयानहेतोर्मृतिःराहुयोगेचोरान्मृतिः केतुयोगेशस्त्रेणचमृतिःअथसंक्षेपादुक्तानांनवमादिभावानांसामान्यचिंतालंबनंउच्यतेनवमभावतोभाग्यजा ताचिंताविधेया अयंभावःभाग्येयोग्रहःभाग्येशोयोग्रहः भाग्यभवनस्थोयोराशिःतद्वच्चारोकेंद्रग्रहभाग्येभवनेशुभाशुभवर्गविवेकः भाग्यभाग्येशबला बलत्वमित्यादिविचार्यजातकशास्त्रविचारंपरिभूयबुद्ध्याफलंवक्तव्यं तथाभिहितंकल्याणवर्मणा भाग्यर्क्षपतिःकस्मिन्कोवाभाग्यर्क्षमाश्रितोविहगः बलवा ॥१५॥

न्मध्ये बलोवाइत्यादि तत्रान्यत्र भाग्योबलिष्ठोयदिमेषराशौचतुःपदोत्थंप्रकरोतिधर्मं वृषेबलिष्ठोबहुधेनुदायीयुग्मेतथाब्राह्मणभोज्यदाता स्यात्कर्कटे तीर्थपरश्चसिंहेजातामनुष्यःपरधर्मनिष्ठः यद्दृष्टिधर्मामनुजोयुवत्यांप्रसिद्धधर्मात्तुलजोमनुष्यः ॥३६॥ द्वादशभावाधिपेलग्नस्थेसतिमानवः सुवचनः सुवा ङ्माधुर्योरूपवान्वाभवति तथास्वर्क्षे स्वगृहेसति कृपणबुद्धिः अनेकपशुयुक्तोग्रामयुक्तश्चग्रामाधिकारयुक्तश्चस्यात् तथाधर्मेनवमेसति तीर्थावलोकीतीर्थ यात्रावान् बहुलवृषमतिः अन्यंतधर्मबुद्धिश्चस्यात् तथापापग्रहयुक्तेसति पापी मिथ्याकोशांतकृत्वृथासंचितद्रव्यनाशश्चस्यात् अस्माद्योगान्नियतंफलं ज्ञेयं ॥३७॥प्रसिद्धधर्मेनिरतोष्टमेभवश्चापेतुशास्त्रेविहगःस्वधर्मा मृगेविरज्येतसुधर्मतोनाकुंभेतुपापादिभवोहिधर्मः १ मीनेबलिष्ठेशुभभावजातस्तडाग

लग्नस्थेरिःफनाथेभवतिसुवचनोमानवोरूपवान्वास्वर्क्षेकार्पण्यबुद्धिर्बहुतरपशुमान्ग्रामयुक्तःसदास्यात् ॥

धर्मेतीर्थावलोकीबहुलवृषमतिःक्रूरयुक्तेचपापीमिथ्याकोशांतकृत्स्यान्नियतमिदमितिज्ञेयमेवंसुधीभिः॥३७॥

वापीभवधर्मनिष्ठः भाग्येशेलग्नगेभूपकर्मकारीधनेधनं बंधुप्रियोभ्रातृभावेचतुर्थेपितृभक्तिमान् २ कृतीतुपंचमेषष्ठेजातोविकलकारकः सप्तमेसुभगस्त्रीवान् खंडःपापाष्टमेस्थिते स्वभेदातादेवभक्तोदशमेनृपकार्यकृत् लाभेदीर्घायुरविलोव्ययेदेशांतरस्थितिः स्वस्वामिदृष्टयुक्तंचेत्स्वदेशफलदायकः मुनिभिरुक्तं होरागमश्चबलवान्येषांतेश्रेष्ठमानवाः होरासारे भाग्येखलाःस्वगृहगाःशुभदृष्टियुतायदि सौभाग्यसौख्ययुक्तस्यजन्मविद्याच्चभूपतेः ३ क्रूरानीचारिभां शस्थाभाग्येशेनचवीक्षिताः सर्वदाभाग्यहीनस्यजन्मविद्यानसंशयः ४ लग्नगेभांतरेराशौमहाभाग्योहिभाग्यतःएकेनमध्यभाग्यःस्यादभावेहीनभाग्यवा

न् ५ गर्गजातके हंतिपुण्यंचभाग्यंचकर्मपुण्यगतोनृणां तुंगेस्वर्क्षेसहस्रांशुः पुष्कलंधर्ममादिशेत् ६ भाग्यभाग्येभवेद्धन्यःपितृपक्षपरायणः धर्मेपूर्णोनि
शानाथःक्षीणःसर्वविनाशकृत् ७ कुजेरक्तपदानंदीभवेत्पशुपातिव्रती भाग्यहीनश्चसततंनरःपुण्यगृहंगते ८ मंदभाग्योबुधेपापेशुभेसौम्येतुधार्मिकः
महाभाग्यःशुभेजीवेतथाशुक्रेबलीयसि ९ दंडप्रदोवक्रगतेनवमस्थेशनैश्चरे स्वर्क्षोच्चगेशनौभाग्येराजाभवतिधार्मिकः १० राहौधर्मगतेजातःसत्यशौ
चविवर्जितः॥अन्यत्र भाग्याधिपश्चेद्यदिकेंद्रवर्ती आदौवयस्येवसुखीमनुष्यः त्रिकोणगःस्वोच्चगतोथवास्यान्मध्येवयस्यल्पफलप्रदःस्यात् भाग्यस्यनाथे
स्वगृहेथमित्रगृहेथवास्यात्स्वनवत्रिभागे भाग्योदयंतस्यवदंतितज्ज्ञाःशुभग्रहैर्द्दैश्चयुतेक्षितेच नीचस्थोवाशत्रुगेहस्थितोवाभाग्यस्वामीरिःफरंध्रारिगोवा
पापैःखेटैःसंयुतोवाथदृष्टोभाग्यैर्हीनःस्याद्दरिद्रीसदैव ३ नवमभावपतीरिपुरंध्रगोनवमभंरिपुदृष्टयुतंतथा यदितदानचधर्मरतोनरःशुभखगेरथधर्मर
तोनरः ४ अबलेपिशुभेखेटेभाग्यस्थेधार्मिकोनरः शुभवर्गयुतेभाग्येशुभकर्मायथान्यथा इत्यादिचिंताविधेया तत्राहजातकसारावलीकारः होरेंद्रोर्बल
योगाद्योदशमस्तत्स्वभावजंकर्म तस्याधिपतेश्चतथावृद्धिर्ज्ञेयान्यथाहानिः १० दशमेनक्षत्रपतिर्लग्नात्पुरुषस्यसंभवति सर्वारंभभवतिहिविनिर्दिशेत्तस्य
जातस्य जातकसारे स्वस्थेखपेखलयुतेखलजेनवांशेस्वोच्चर्क्षगेस्वभवनेसुखवृत्तयःस्युः . नीचारिभावगृहगेल्पसुखाल्पपुण्योदासोपचारभृतकानुचराश्च
दासीः धर्मभावेशुभक्षेत्रेशुभदृष्टेसुकर्मकृत् पापेक्षितेपापकर्मास्वामिदृष्टेतुमध्यमाः वैद्याःपुरोहिताःशास्त्रस्मृतिज्ञावंचकानराः जायंतेकर्मगैःपापैःसौम्य
ग्रहानिरीक्षितैः वराहोरार्थाप्तिःपितृपत्निशत्रुमित्रभ्रातृस्त्रीभृतकजनाद्दिवाकराद्यैः होरेंद्वोर्दशमपतिर्विकल्पनीयाभेंद्वर्कास्पदगतिःगोत्रनाशभृत्यां १ अर्को

शेतृणकणकर्णभेषजाद्यैश्चंद्रांशेकृषिजलजांगनाश्रयैश्च धान्वग्निप्रहरणसाहसैःकुजांशेसौम्यांशेलिपिगणितादिकाव्यशीलैः जीवांशेद्विजविबुधदिवाकरा दिधर्मैःकाव्यांशेमणिरजतादिगोमहिष्यैः सौरांशेश्रववधभारतीचशिल्पैःकर्मैसाध्विषितनवांशकर्मसिद्धिः मित्रारिस्वगृहगतैस्ततस्ततोर्थात्तुंगस्थेबलिनि चभास्करेस्ववीर्यात् राज्याधीशेकेंद्रगेसौम्यदृष्टेपापेकेंद्रस्थेप्सुप्रतापाभिधानः जातोनित्यंभूमिपैःसेवनीयोभाग्यैर्युक्तःसुप्रतापप्रसिद्धइति अथलाभ स्थाने अखिलानांवस्तूनांप्राप्तिश्चिंताविधेया तत्रहोराप्रदीपेस्वस्वामिग्रहयुतेक्षित आयुर्वर्गेसद्धर्मकेभवतिवस्तुविशेषलाभः क्रूरेचदृष्टिसहितेनचतत्रला भस्तद्वर्गकेप्ययथचमिश्रफलंविवक्ते लाभेरवीक्षितयुतेरविवर्गयुक्तेचोराच्च नृपदयुताच्चभवेत्प्रतापः तद्धद्विधेयुवनितोयजनादिजातोवित्तंसुवर्णमणियावक शास्त्रजातः ज्ञापेक्षितिज्ञागणआयेग्रहंवनंस्यात् शिल्पादिकाव्यलेखोस्तुंगेसकांस्येजीवेक्षितायेगुरुवर्गयुतायेगेहेयज्ञादिहेमहयनागरथादिमुख्यैः शुक्रे क्षितायशनिवर्गयुतेमहिष्यलोहादिकुप्यनकार्यभवाभिवृद्धिः नीचारिभार्कगावगेकरुंदयाद्भीतिग्रहेद्भवबलेबलिनस्तुवाच्यमिति व्ययग्रहा न्निधनग्रहाच्चमलिनकर्मणांचिंताविधेया गर्गजातके क्षीणेब्जेवारवौरिःफेधनंपुंसामथोहरेत् बहुधार्थक्षयोभौमेज्ञदृष्टेन्येषुसिद्धयः नृपीडानचसंतसंपरि वादेनपीडतः नृशंसंपुरुषंचांद्रिःकुरुतेव्ययराशिगः उच्छ्रितव्ययकारीचव्ययगेदेवतागुरौ श्रद्धाहीनोघृणाहीनोव्ययगेभार्गवेनरः व्ययस्थानगतेमंदेक्रू रेषुकुरुतेरुचिं व्ययेराहौनीचकर्माकपटीकुलदूषकः व्ययेभावेस्वामियुक्तेशुभदृष्टेचनान्यपि कीर्तिमान्जायतेमर्त्योविपरीतेविपर्ययः ॥ ३७ ॥

सुधीभिरिदंनियतंनियमेनज्ञेयं अध्यायंसमापयतिशालिनीवृत्तेन श्रीगणेशेनभावाध्यायः शैलरामैर्वृत्तैःसप्तत्रिंशद्भिःश्लोकैरुक्तः ॥३८॥ इतिश्रीजातका
लंकारटीकायांभावफलाध्यायोद्वितीयः॥ २ ॥ अथयोगाध्यायः तत्रतावत्शुभाशुभयोगान्व्यवस्ययोगांतरंवक्तुंप्रतिजानीतेशिखरिणीवृत्तेन पु

त्वद्यैःपद्यैर्गुंफितेसूरितोषिलंकाराख्येजातकेमंजुलेस्मिन् ॥ भावाध्यायःश्रीगणेशेनवर्यैर्वृत्तैर्युक्तःशैलरामैःप्रणीतः ॥३८॥
इतिश्रीजातकालंकारेभावफलाध्यायोद्वितीयः ॥२॥ ॥ ग्रहाधीनायोगाःसदसदभिधानाज्ञनिमतांततोयोगाधीनंफल
मितिपुराणैःसमुदितं ॥ अतोवक्ष्येयोगान्सकलगणकानंदजनकान्शुकास्यादुद्भूतंमतमिहविलोक्येहरुचिरं ॥१ ॥ऋक्षे
शःक्षीणवीर्यःसुतनवमगतोमानवोमन्युमान्वैराशीशेसांगनाथेरिपुनिधनगृहेप्रांत्यगेदुर्बलःस्यात्॥ धर्मद्व्याष्टनाथाःखल
खचरयुताःस्थानकेक्वापिसंस्थास्तैर्दृष्टाःस्यात्तदानींपरपुरुषरतासुंदरीतस्यपुंसः॥ २॥

राणैर्वसिष्ठशुकपराशरप्रभृतिभिःप्रोक्तंफलंयोगाधीनंअतःसकलगणकानंदजनकान् अशेषज्योतिर्विदांप्रीत्युत्पादकान्योगान्वक्ष्ये किंकृत्वाशुकास्यात्
शुकमुनिमुखादुद्भूतंरुचिरंशोभनमतंविलोक्यआलोच्य १ अथानिष्टयोगानाह ऋक्षेशः जन्मराशिनाथःक्षीणबलःसन्त्रिकोणगतश्चेन्मानवोजातःमन्यु ॥१७॥

मानूक्रोधीस्यात् जन्मराशीशेसांगनाथैतनुपतिसहितेत्रिकस्थेदुर्बलःस्यात् यस्यनवमषष्ठाष्टमेशाःक्रूरग्रहदृष्टियुक्ताः यत्रकुत्रापिस्थिताःयदितदानींत स्यभार्याजारगामिनीस्यात् ॥२॥ यस्यजन्मनिषष्ठाष्टमभवननाथौकुजविधुयुतौचतुर्थस्थौस्यातांतदानींसनरःअन्यजातःजारजातःतथानवमषष्ठाधिना थौयत्रकुत्रापिस्थितौक्रूरग्रहयुतौअथवाकेवलेनराहुणाशिखिनावायुतौस्यातांतदान्यजातःकलुषखगयुताविन्यनेनराहुः केतुरपिसर्वक्रूरयोगेविवक्षितः

मातृस्थानेस्थितौचेत्कुजविधुसहितौषष्ठरंध्राधिनाथौस्यातांयस्यप्रसूतौभवतिखलुनरस्त्वन्यजातस्तदानीं॥क्वापिस्थानेस्थितौ स्तःकलुषखगयुतौभाग्यषष्ठाधिनाथौचेदेवंराहुणावातदनुचशिखिनासंयुतावन्यजातः ॥ ३ ॥ युक्तौमंदेनशूद्रादथभव तिविदावैश्यतोभास्करेणक्षत्राज्जातःसितेनत्रिदशपगुरुणाभूमिदेवात्प्रसूतः ॥ दैत्येशोज्यौसपापौमदनरिपुधनस्थानगौचे त्परस्त्रीगामीव्योमारिपैस्तोगगनभवनगौतात्पिताऽन्यारतःस्यात् ॥ ४ ॥

अग्रिमश्लोकेमंदादीनांपार्थक्येनयोगापदेशात् कलुषखगयुताविन्यनेनैवसिद्धेराहुकेतुग्रहणंछंदोनुरोधात् ॥३॥ भाग्यषष्ठाधिनाथौमंदेनयुक्तौशूद्राज्जा तः उत्पन्नोभवति अथबुधयुक्तोवैश्याज्जातः भास्करेणयुक्श्चेत्क्षत्रात्क्षत्रियाज्जातः गुरुशुक्राभ्यांब्राह्मणाज्जातः बुधगुरुशुक्राणांकलुषखगयुतत्वे क्रूरैर्दृष्टत्वेतद्योगेननीचत्वेनास्तंगतत्वेक्रूरवर्गस्थत्वेनवासुधीभिर्बोध्यं अथशुक्रबृहस्पतीसक्रूरौसप्तमषष्ठधनस्थानगतौचेत्तदापरस्त्रीगामीस्यात् दश

मषष्ठाधिपौदशमस्थौतदातत्पिताजातस्यपिता अन्यरतः स्यात् परस्त्रीगामीस्यात् ॥ ४ ॥ क्रूरयुक्तोलग्नेशः द्वितीयस्थश्चेत्तत्पितासज्जनस्त्रीसंयुक्तः साधुजनस्त्रीगामस्यात् सप्तमषष्ठद्वितीयभावेशाः क्रूरयुताः द्वितीयस्थाश्चेत्तद्वदेवंफलंविविधमिति एवंप्रकारःविविधफलमितिज्ञेयं सज्जनस्त्रियापासक्तिर्दुराचारत्वं अभक्ष्यभक्ष्यकत्वमित्यादिज्ञेयमितिभावः तृतीयसप्तमचतुर्थदशमेशास्तनुपतिसहितायत्रकुत्रापिस्थिताश्चेज्जातःपुमान्जारजातः ॥५॥ लग्नेशबुधौ

मूर्तीशःपापयुक्तोधनसदनगतश्चेत्तदासज्जनस्त्रीसंयुक्तस्तत्पितास्याद्बलविहगयुताः कामषड्भानुस्वनाथाः॥ कोशस्थास्तद्वदेवंफलमितिविनिर्देभ्रातृपत्न्योश्चपित्रोः स्थानेशाः क्वापिभावेतनुपतिसहिताश्चेत्पुमानन्यजातः ॥ ५॥ लग्नाधीशेंदुपुत्रौक्षितितनयनिशानायकौक्वापिसंस्थौयुक्तौस्वर्भानुनावाभवतिहिमनुजः केतुनाश्वेतकुष्ठी ॥ आदित्योभौमयुक्तस्तदनुशनियुतोरक्तकृष्णाख्यकुष्ठीस्यात्कौलग्नाधिनाथोव्ययरिपुनिधनस्थानगस्तात्गंडः ॥ ६ ॥

कुजचंद्रौवाराहुकेत्वन्यतरयुतौतदाजातःश्वेतवर्णोपलक्षितकुष्ठरोगीभवति तदनुभौमशनियुतः आदित्यश्चेद्रक्तवर्णकृष्णवर्णनामककुष्ठवान्स्यात् सूर्ययुतोलग्नेशः त्रिकभवनस्थश्चेत्तदाजातस्यतापगंडस्तापगंडान्वितोगंडोरोगविशेषःस्यात् ॥६॥ ॥१८॥

चंद्रेणयुतोलग्नेशः त्रिकस्थश्चेज्जलजोगंडःस्यात् भौमयुतोलग्नेशस्त्रिकस्थश्चेत्तदाग्रंथिशस्त्रव्रणःस्यात् ग्रंथ्युपलक्षितःशस्त्रजोव्रणः स्यादित्यर्थः बुधयुतोल
ग्नेशःत्रिकस्थःपित्तरोगःस्यात् जीवेनयुतोलग्नेशः त्रिकस्थश्चेत्तदाआमोद्भूतःआमकोपजोरोगःस्यात् शुक्रेणयुतस्तत्रस्थितोलग्नेशस्तदानुर्मनुष्यस्यक्षया
ख्योरोगःयमशिखितमसामेकयुक्शनिराहुकेतूनांमध्येएकेनयुक्तोलग्नेशः त्रिकस्थश्चेत्तदाचोरजअंत्यजादुत्पन्नोवारोगः स्यात् रजकचर्मकारादयोंत्य

ज्ञेयश्चंद्रेणगंडोजलजइहयुतोग्रंथिशस्त्रव्रणःस्याद्भूमीपुत्रेणपित्तंहिमकरतनयेनाथजीवेनरोगः ॥ आमोद्भूतस्ततश्चेद्भृगुत
नययुतोनुःक्षयाख्योगदःस्याच्चौरोद्भूतोंत्यजाद्वायमशिखितमसामेकयुक्तन्वधीशः॥७॥चंद्रोमेषवृषेवाकुजशनिसहितः
श्वेतकुष्ठीसरोगोदैत्येज्यारेंदुमंदास्तिमिभवनगताःकर्कटालिस्थितावा ॥ अंगेसौख्येनहीनःपरमकलुषकृद्रक्तकुष्ठीनरः
स्याद्वागीशोभार्गवोवायदिरिपुगृहपोमूर्तिगःक्रूरखेटैः ॥ ८ ॥

जाः॥ ७॥कुजशनियुतश्चंद्रोमेषेवृषेवायदितदानरश्वेतकुष्ठीस्यात् शुक्रभौमेंदुशनयःमीनराशिस्थायद्वाकर्कटवृश्चिकस्थाःतदानरः शरीरसौख्यरहितःम
हापातकीरक्तकुष्ठीस्यात् गुरुःशुक्रोवाषष्ठभावाधिपःक्रूरैर्दृष्टोलग्नस्थश्चेत्तदावकृत्रशो'गेमुष्काधिकारणकश्चपृथुरोगयुतःस्यादित्यग्रिमश्लोकेनसंबंधः॥८॥

अथमीनकर्कवृश्चिकराशयुपलक्षितामावाः क्रूरसहिताः यदितदानराणांएवंप्रकारेणचिरंकुष्ठंस्यात् तत्रप्रकारमाह यत्रलूताकारकःसविशेषः जंतुविशेषःउ
त्कृष्टगदविशेषकरः लूताकारकुष्ठः स्यादित्यर्थः गुरुर्व्ययस्थश्चेन्नरः गुल्मरोगीस्यात् यद्वावैद्याज्ञानरोगीस्यात् भौमशनीव्ययेषष्ठेवास्यातांतदाव्रणीव्रण

दृष्टश्चेद्वक्रशोफीत्वथखलसहितामीनकर्कालिभावालूताकारश्चिरंस्यात्परमगदकरः कुष्ठएवंनराणां ॥ रिःफस्थान
स्थितश्चेद्विबुधपतिगुरुर्गुल्मरोगीनितांतंभूमीमार्तंडपुत्रौव्ययभवनगतौशत्रुगौवाव्रणीस्यात् ॥ ९ ॥ मेषेमीनेकुलीरेतदनु
चमकरेवृश्चिकेमंदचंद्रौस्यातांक्रूरान्वितौचेन्नवमभवनगौमानवः स्याच्चखंजः ॥ लग्नस्थंपश्यतींदुंदिनमणितनयंभूमिजो
द्यूनदृष्टौबुध्याहीनोनरः स्यादिनविधुविवरेभूमिजश्चेत्तथैव ॥ १० ॥

युनः स्यात् ॥९॥ क्रूरग्रहयुतौचंद्रशनीमेषमीनमकरवृश्चिकान्यतमराशिगतौनवमभवनगौचेन्मानवोजातःखंजः खंजाख्यपादरोगीस्यात् भूमीपुत्रःसप्त
मदृष्ट्यालग्नस्थंचंद्रंशनिंचपश्यतिचेत्तदानरः बुध्याहीनःस्यात् इनविधुविवरेरविचंद्रयोर्मध्येभौमश्चेत्तथैवबुद्धिहीनः स्यात् इनशब्दोलक्षणयादिनकर

परोज्ञेयः ॥१०॥ चंद्रे लग्नेसाधिकारेग्रहहोराद्रेष्काणादिवर्गाधिपत्यसहितेशनौदशमस्थेबुधेनपूर्णदृष्टेऽस्मिन्मानवोजातः बुद्धिमान्स्यात् लग्नस्थंभौमंचंद्रंच पूर्णदृष्ट्याबुधः पश्यतिचेद्बुद्धिहीनःस्यात् यद्वा चंद्रलग्नशौभौमेनपूर्णदृष्ट्यापीडितौबुद्धिहीनःस्यात् ॥११॥ लग्नस्थेबुधेतरग्रुक्रूरग्रहदृष्टौशुभग्रहदृष्टिर

प्रालेयांशौतनुस्थेगगनसदनगेसाधिकारेऽर्कसूनौदृष्टेऽस्मिन्कामदृष्ट्याहिमकिरणभुवाबुद्धियुङ्मानवःस्यात् ॥ पृथ्वीसूनुंमृगांकंतनुनिलयगतंपूर्णदृष्ट्येंदुसूनुःपश्येच्चेद्बुद्धिहीनस्त्वथशशितनुपौभूभुवापीडितौवा ॥ ११ ॥ लग्नस्थेरौहिणेयेतदनु रविशनीक्रूरदृष्टौरिपुस्थावेकर्क्षेचैकभागेभवतिगतमतिर्दृष्टिहीनौशुभानां॥ तिग्मांशौवैरिनाथेखलविहगयुतेतुर्यगेसूर्यसूनौ त्वग्रोगीवाक्पतौवाभवतिहृदिनरःकृष्णपित्तीसकंपः ॥१२॥

इतौरविशनीएकराशौअथवाएकभागे चक्रस्यपूर्वार्धेपरार्धेवाएकत्रगौषष्ठस्थौचेत्तदागतमतिर्नष्टमतिःस्यात् षष्ठभवननाथेसूर्येक्रूरग्रहयुतेतुर्यगेसतित्वग्रोगीस्यात् शनौगुरौवाषष्ठेशेक्रूरसहितेचतुर्थस्थेन्हृदिकृष्णपित्तरोगीस्यात् अथवादुष्टैःपीडितोन्हृदिसकंपः स्यात् ॥१२॥

अथकुजःसूर्यजोगुरुश्चतुर्थस्थायदितदाइहयोगेन्हृद्रोगाद्धेतोर्नराणांशरीरेक्लेशकारीव्रणःनियमेनस्यात् यदाजन्मसमयेभौमःचतुर्थस्थःसूर्यबुधराहवः पंचमस्थाःशनिःअष्टमस्थःतदाजातोनरःदुःखभागीभवति ॥ १३ ॥ स्वक्षेत्रस्थितोभौमोयदिलग्नंपश्येत्तदाजातःकातरःभीरुःस्यात् यदिशनिर्दशमस्थो

दुष्टैर्वापीडितः सन्नथकुजरविजौवाक्पतिर्बिधुसंस्थात्हृद्रोगःस्यान्नराणांव्रणइहनियतंक्लेशकारीशरीरे॥पातालस्थोमही जस्तनयनिलयगाःसूर्यवित्सैंहिकेयोरंध्रस्थोभानुपुत्रोयदिजनुषितदास्यान्नरोदुःखभागी ॥१३॥ लग्नंपश्येन्निजर्क्षेयदि धराणिसुतःसंस्थितःकातरःस्याच्छायासूनुर्नभस्थोयदिनिशिजननंतद्वदत्रापिवाच्यं॥मूर्तौभूमीतनूजेस्वजनकलहकृत्द्यून गेस्वाधिकाराद्धीनेभौमेवपुष्मान्परमयुधिरतस्तीक्ष्णभावश्चनूनं ॥१४॥ पश्येतांकामदृष्ट्याधरणिविधुसुतौचेन्मिथःस्यात्त दानीमुच्चाकारोथचंद्रंशनिरविमाहिजाश्चेत्प्रपश्यंतिशीतः॥क्षीणेप्रालेयनाभौधरणिजसहितेपापभूमीखरःस्यान्मूर्तिस्थोद्यू नदृष्ट्याहिमकरतनयोवासेवर्ज्यंप्रपश्येत् ॥१५॥

रात्रौजन्मचेदत्रापितद्वाच्यं कातरःस्यादित्यर्थः लग्नगेभौमेस्वजनकलहकरःस्यात् स्वाधिकाराद्धीनेस्वगृहहोराद्रेष्काणादिरहिते सप्तमेभौमेवपुष्मान् दृढशरीरःअत्यंतयुद्धप्रीतिमान्तीक्ष्णस्वभावश्चस्यात् नूनंनिश्चयेन ॥१४॥ धराणिविधुसुतौभौमबुधौमिथःअन्योन्यंसप्तमदृष्ट्यापश्येतांतदानींजातः उच्च

शरीरः स्यात् अथशनिरविभौमाश्चंद्रं पश्यंतिपूर्णंपश्यंतितदाजातः शीतः शीतलस्वभावः स्यात् शीतलत्वंजडत्वंगूर्खत्वमित्यर्थः क्षीणेचंद्रे भौमसहितेपा
पभूमीःपापकृत्खरस्तीक्ष्णभावः स्यात् मूर्तिस्थोबुधःसप्तमस्थेगुरुंपश्येत्तदाजातोहास्यासक्तइत्यग्रिमश्लोकेनसंबंधः ॥१५॥ अथभौमसहितेबुधेशुभर्क्षे
शुभग्रहराशौयद्वाकुजज्ञौसूर्येदृष्टौमंदराशिस्थाः तदाराज्ञांविदुषांचरंजनेहर्षोन्मुखीकरणेप्रवीणःस्यात् त्रिकस्थः चंद्रः शुक्रंपश्येत्तदाविस्मयालुः वि

हास्यासक्तः सभौमेहिमकरतनयेस्याच्छुभर्क्षेकुजज्ञौमंदर्क्षेवार्कदृष्टौनरपतिविदुषांरंजनेकोविदःस्यात् ॥ पश्येत्काव्यंसि
तांशुर्व्ययविलयरिपुस्थानगोविस्मयालुःक्षिप्रंवाक्स्फूर्तिमान्स्यात्कुजबुधशशिनोवीर्यवत्खेटदृष्टाः॥१६॥ शुक्रज्ञौद्यून
यातौगगनविलयगौमानवःपुंश्चलःस्यात्कामाज्ञामंदिरस्थौकविधरणिसुतौतद्वदाज्ञांबुयातौ ॥ काव्यारौतद्वदिंदोर्नभसिर
विसुतादास्फुजिन्नीरयापितद्वत्कामास्पदस्थाबुधसितशनयःस्वर्क्षगेभार्गवेहि ॥ १७ ॥

स्मययुक्तःस्यात् कुजबुधेंदवः बलिष्ठग्रहदृष्टाश्चेच्छीघ्रंयथास्यात्तथावचनस्फूर्तियुक्तः स्यात् ॥१६॥ शुक्रबुधौसप्तमाष्टमदशमगतौतदामानवःपुंश्चलःव्य
भिचारीस्यात् शुक्रभौमौसप्तमदशमस्थौतद्वत्पुंश्चलःस्यात् शुक्रभौमौचतुर्थदशमगौतद्वत्पुंश्चलःस्यात् चंद्राद्दशमेशुक्रेशनेश्चतुर्थेशुक्रःतदातद्वत्पुं
श्चलः शुक्रेस्वराशिस्थेशुक्रबुधशनयःसप्तमदशमस्थाःतदातद्वदित्यनुषंगः ॥ १७ ॥

चंद्रात्शुक्राद्वाशनिस्तत्पुरोभागवर्तितदाग्रिमभावेस्थितः चंद्रसूर्यौलग्नस्थौशनिंपश्यतैश्चेत्तदाजातःअयशाअपकीर्तिःस्यात् अथसूर्ययुतेशनौभूमिजके
इलग्नस्थेशुक्रचंद्रदृष्टेसतिदिवसपतेःसूर्यस्योपरागःशेफच्छेदःलिंगच्छेदःतद्वदपकीर्तिःस्यात् ॥ १८ ॥ शुक्रेवक्रग्रहराशिगतेसतिमानवोजातःसीमंति

प्रालेयांशात्सिताद्वादिनमणितनयस्तत्पुरोभागवर्तीमूर्तौचेच्चंद्रशुक्रौयदितरणिसुतंपश्यतश्चायशाःस्यात् ॥ शेफच्छेदोन
राणामथतपनसुतेभूमिकेंद्रेऽर्कयुक्तेदृष्टेकाव्योडुपाभ्यांयदिदिवसपतिश्चोपरागोत्रतद्वत् ॥१८॥ यातेवक्रग्रहर्क्षेजनुषिभृ
गुसुतेमानवस्तोषदायीसीमंतिन्यारतेःस्यान्नखलुमदनगंभार्गवंलग्ननाथः ॥ पश्येत्स्वीयालयस्थोयदिरहसितदाकामिनी
तोषदातानस्यादेवंहिमांशुर्दिनकरसुतयुक्भौमतःखेसुखेवा ॥ १९ ॥ क्षोणीपुत्रेणयुक्तःप्रथमसुरगुरुर्लग्नतःषष्ठगोऽयं
कामाधिक्यंनराणांजनयतिनियतंपापदृष्टोविशेषात् ॥ काव्येस्वीयालयस्थेतदनुमिथुनगेकामवान्मानवःस्यान्मूर्तौसप्ताश्व
सूनौधनुषिचवृषभेचेत्पुमानल्पकामः ॥ २० ॥

न्याःरतेःसंभोगाद्धेतोस्तोषदायीसुखदायीसुखदः स्यात् स्वीयालयस्थोलग्ननाथःसप्तमगःभार्गवंयदिपश्येत्पूर्णदृष्ट्याइतिशेषः तदाजातःरहसिरति
स्थानेकामिनीतोषदातानस्यादेव ॥ १९ ॥ द्वौद्वौप्रकृतेर्थेमन्मयतइतिन्यासात् चंद्रःशनियुतःभौमाच्चतुर्थेदशमेवास्यात्तदाएवमुक्तप्रकारेणकामिनी

तोषदातानस्यात् एवंप्रथमसुरगुरुशुक्रःभौमयुक्तेज्यलग्नात्षष्ठपःषष्ठभावाधिपःतदाजातनराणांकामाधिक्यंकामबलप्रचुरतांनियमेनजनयतिसशुक्रःपाप दृष्टश्चेत्तुविशेषात्कामाधिक्यंजनयति तदनुशुक्रेस्वभवनस्थेमिथुनस्थेवामानवः कामवान्स्यात्सप्ताश्वपुत्रःशनिःधनुषिवृषेवालग्नेचेत्तदा मानवोऽल्पकामः स्यात्॥२०॥शनौमकरस्थेसति अल्पभाषीअप्रयोजनबहुभाषीभवति तदनुषष्ठभवननाथेचंद्रेवाक्रूरयुतेअदृश्यार्धेसंस्थितेसतिजनिमतांनेत्रयोरंकः चि

मंदेनर्क्षेऽल्पभाषीत्वथरिपुगृहपेवासुधांशावदृश्येचेदर्धेसंस्थितेंकोभवतिजनिमतांनेत्रयोःक्रूरयुक्ते॥ पश्येत्क्षीणंनचंद्रंयदिभृगुतनयःसूर्यजःपश्यतींदुंस्वर्क्षेचंद्रेनभस्थेयदिमदनगतैर्वीक्ष्यतेपापखेटैः ॥ २१ ॥ स्यान्नूनंचाल्पनेत्रस्तदनुतनुगतंभूमिजंवाक्षयेशंपश्येद्वाचस्पतिश्चेदसुरकुलगुरुःकाणदृङ्मानवःस्यात् ॥ विच्छायातिग्मभानोःक्षितिभुविचपुरोभागगेदृङ्नराणांसौम्येचिन्हंदृशिस्यादथवपुषिलयेभार्गवेक्रूरदृष्टे ॥२२॥

न्हविशेषोभवति सप्तमभावभोग्यांशानारभ्याष्टमादिक्रमेणलग्नभुक्तांशपर्यंतमदृश्यार्धंज्ञेयं यदिक्षीणंचंद्रंशुक्रोनपश्येत् शनिरिंदुंपश्यतिकर्कस्थेचंद्रेदशमेसप्तमेवास्थितैःक्रूरग्रहैर्दृष्टेतदानूनंनिश्चयेन स्वल्पनेत्रःस्यादित्यग्रिमपद्येनान्वयः॥२१॥ तदनुलग्नस्थंभौमंचंद्रंवावाचस्पतिःशुक्रश्चपश्येत् चेत्तदा मानवः काणनेत्रः स्यात् तिग्मभानोःसूर्यात्पुरोभागगेअग्रगामिनि अस्ताभिलाषिभौमेनराणां दृक्विछायाकांतिरहितास्यात् सूर्यात्बुधेपुरोभागगेदृशिचि

न्हंस्यात् अथभार्गवेशुक्रेलग्नस्थेऽष्टमेवाक्रूरदृष्टेसतिअश्रुपाताद्धेतोर्नेत्रपीडास्यात् अग्रिमश्लोकस्थेनसंबंधः २२ ॥ तदनुचंद्रभौमौएकभागैकन
वांशस्थौतदानेत्रयोःकिंचित्चिन्हंस्यात् सुधीभिर्योगकर्तृग्रहबलवशात् एवमुक्तप्रकारेणादेश्यंवक्तव्यं तदनुक्रूरग्रहदृष्टेयुतेवासूर्येव्ययगेनवमेपंचमेस



नेत्रेपीडाश्रुपातात्तदनुशशिकुजावेकभांशेयदाक्ष्णोश्चिन्हंकिंचित्तदानींग्रहबलवशतोहृद्यमेवंसुधीभिः ॥ मार्तंडेरिःफयाते
तदनुनवमगेपुत्रगेवाखलाढ्येदृष्टेवास्यान्मनस्वीसुविकलनयनःसूर्यजेव्याधियुक्तः ॥ २३ ॥ चंद्रेपृष्ठोदयस्थेहिबुकगृह
गतःसूर्यसूनुःप्रपश्येदित्थंलग्नाधिनाथेक्रियभवनगतेमानवोवामनःस्यात् ॥ कोशेपीयूषभानुर्जलचरगृहगःसौरिणासंयु
तोवामार्तंडेभूमिकेंद्रेयदिभवतितदादद्रुमान्पूरुषःस्यात् ॥ २४ ॥

ति जातःसुविकलनेत्रोऽप्रशस्तनयनःस्यात् सूर्यजेशनौक्रूरयुतेदृष्टेद्वादशगेनवमपंचमगेव्याधियुक्तोरोगीस्यात् ॥ २३ ॥ पृष्ठोदयराशिगंचंद्रंचतुर्थभाव
स्थःशनिःप्रपश्येत् लग्नपेमेषराशिस्थितेजातोमानवःवामनःह्रस्वकायःस्यात् जलचरराशिस्थःचंद्रःद्वितीयेअथवाशनिनायुक्ते अथवा सूर्येलग्नगेय
दिभवतितदादद्रुमान्कुष्ठयुक्तःपुरुषःस्यात् ॥ २४ ॥

षष्ठभावाधिपे चंद्रे सौम्यदृष्टिरहिते केवलं क्रूरैर्दृष्टे स्त्री हपीडितः स्यात् एवं कामांगनाथे सप्तमनाथे लग्ननाथे वा चंद्रे केवलं क्रूरदृष्टे स्त्री हवान्स्यात् पापग्रहैर्दृष्टः श निश्चतुर्थश्चेन्नष्टदृष्टिः अंधः स्यात् क्रूरग्रहैः निष्पीडिते दृष्ट्या योगेन वा विकलीकृते यद्वा वर्जिते लग्नेशे शनौ सौख्यायुक्सौख्यरहितः स्यात् लग्नगते शनौ स्त्री हवान् आनंदरहितश्च स्यात् ॥२५॥ यदा क्रूराः केंद्रगास्तदा जातः वपुषि शरीरे विकलः विकलांगः स्यात् पुष्पवंतौ सूर्यचंद्रौ वे द्रगौ वा तदा विकलांगः

दृष्टे क्रूरैर्नसौम्यैर्यदि रिपुगृहपे चोडुपे स्त्री हवान्स्यादेवं कामांगनाथे तदनु रविसुतस्तुर्यगो नष्टदृष्टिः ॥ स्त्री ही स्याल्लग्ननाथे दिनकरत नये क्रूरनिः पीडिते चेत्सौख्यायुक्मानवः स्यात्तदनु सदनगे स्त्री हवान्हर्षहीनः ॥२५॥ क्रूराः केंद्रालयस्था वपुषि च विकलः केंद्रगौ पुष्पवंतौ किंवा लग्ने प्रपश्येत्कविमिनतनयः श्रोणिभागे गहीनः ॥ काव्यः पातालयायी सुरपतिगुरुणा कापि युक्तोऽर्कसूनु र्भौमो वा रौहिणेयो भवति हि विकलः श्रोणिभागे भुजंघौ ॥२६॥

अत्र पुष्पवंताविन्युक्त्या चंद्रसूर्ययोरेकराशिस्थत्वं विवक्ष्यते चंद्रस्य क्षीणत्वाद्योगस्य विकलतेति भावः लग्नस्थं शुक्रं शनिः पश्येत्तदा श्रोणिभागे कटितटे अं गहीनः शुक्रश्चतुर्थगः गुरुसहितः शनिर्भौमो बुधो वा यत्र कुत्र स्थितस्तदा कटितटे हस्ते चरणे वा विकलः स्यात् ॥२६॥

निधननवमेशौक्रूराच्चतुर्थगौक्रूरयुतौजंघाविकल्यवान्पंगूरुःस्यात् राहौभौमशनियुतेषष्ठगेचकारात् भौमेशनियुतेसूर्येषष्ठगतेतद्वत्पंगुःस्यात् एवंशनिं
षष्ठभावेशौक्रूरदृष्टौव्ययस्थौतद्वत्पंगुःस्यात् सूर्यविधुशनयःषष्ठाष्टमभावस्थाः तदानींतस्यपंचशाखेहस्तेआर्तिः पीडास्यादित्यग्रिमस्थेनसंबंधः ॥२७॥





आयुःपुण्याधिनाथौयदिखलखचरात्तुर्यगौपापयुक्तौजंघावैकल्यवान्स्यात्कुजशनिसहितेसैंहिकेयेचसूर्ये ॥ द्वेष्यस्थेतद्व
देवंशनिरिपुगृहपौरिःफयातौखलैश्चेदृष्टौतद्वत्तदानींरविविधुरविजाबैरिरंध्रालयस्थाः ॥ २७ ॥ स्यादार्तिःपंचशाखेतद्व
नुदशमगेसूर्यसूनौसिताढ्येक्लीबःस्यात्सूर्यसूनौव्ययरिपुगृहगेशुक्रतःक्लीबरूपः ॥ पश्येत्सूर्यालयस्थोमदनभवनगंभूमिसू
नुंसुधांशुश्चार्कःकाणश्चकर्केयदिशुभगृहपोमेषसिंहालिनक्रे ॥ २८ ॥

तदनुशुक्रयुतेदशमस्थेशनौक्लीबोनपुंसकः स्यात् शुक्राक्रांतराशेः व्ययषष्ठगेशनौक्लीबरूपःरूपेणक्लीबसदृशःनतुक्लीबःसिंहराशिस्थश्चंद्रःसप्तमगंभौमं
पश्येत्तदाकाणःस्यात् कर्कस्थःसूर्यःसप्तमगंभौमंपश्येत्तदाकाणः उभययोगेपिकाणःस्यात् यदिनवमपःमेषसिंहवृश्चिकमकरेस्यादितिसंबंधः ॥२८॥

सूर्यचंद्रौओजर्क्षयुग्मराशौइत्याकृष्यान्वयः अन्योन्यंपरस्परंपश्यतःओजराशिगःसूर्यः समराशिगंचंद्रंपश्यतितादृशश्चंद्रश्चसूर्यंपश्यतिअयमेकोयो
गः तत्तनूजौशनिबुधौओजसमराशिगौअन्योन्यंपश्यतःइतिद्वितीयोयोगः समराशिगंसूर्यंभौमः विषमराशिगइत्यर्थात्सिद्धं भौमंचसूर्यः अन्योन्यं
पश्यतिइतितृतीयोयोगःलग्नचंद्रौविषमराशिगौभौमेन अर्थात्समराशिगेनदृष्टौइतिचतुर्थोयोगः चंद्रबुधौक्रमेणविषमसमराशिगौभौमेनवीक्षिताविति पं

अन्योन्यंपश्यतश्चेत्तरणिहिमकरौतंत्तनूजौमिथोवाभूसूनुःपश्यतीनंसमभवनगतंत्वंगचंद्रोयदौजे ॥ ओजर्क्षयुग्मराशौ
हिमकरशशिजौभूसुतेनेक्षितौचेत्पुंराशौलग्नशुक्रौतद्दनुहिमकरः क्लीबयोगाःषडेते ॥२९॥ आयुःस्थानोपयातोधरणि
सुतयुतेभार्गवेवातकोपात्काव्येभौमेनयुक्तेकुजभवनगतेभूमिजामुष्कवृद्धिः ॥ भौमर्क्षेकाव्यचंद्रौसुरपतिगुरुणासूर्यजेना
थदृष्टौनूनंस्यान्मानवानांजनुषिकलजामुष्कवृद्धिर्नितांतं ॥ ३० ॥

चमोयोगः लग्नशुक्रौचंद्रश्चपुंराशौपुरुषग्रहराशिनवांशेस्थिताविति षष्ठो योगः एतेषट्क्लीबयोगाज्ञेयाः तदुक्तंसारावल्यां अन्योन्यंरविचंद्रौविषमाविषम
र्क्षगौनिरीक्षेते इंदुजरविपुत्रौवातथैवनपुंसकंकुरुते १ वक्रोविषमगतोऽर्कंसमगंचैवंपरस्परालोकात् विषमर्क्षेलग्नेंदूसमराशिगतःकुजोविलोकयति२ शशि
[illegible]जौसमविषमेभौमेननिरीक्षितौभवतः ओजनवांशकसंस्थालग्नेंदुसितास्तथैवोक्ताइति ३ ॥२९॥ भौमयुतेशुक्रेऽष्टमस्थेवातकोपान्मुष्कवृद्धिः वृषणवृ

द्धिः स्यात् भौमराशिगते भौमयुते शुक्रे भूमिसंसर्गान्वातकोपजा वृषणवृद्धिः स्यात् येषां मानवानां जन्मसमये भौमराशिस्थौ शुक्रचंद्रौ गुरुशनिदृष्टौ तेषां कललजा कललदोषजा वृषणवृद्धिः अतिशयिता स्यात् कललं शुक्रशोणितमिश्रीभावः ॥ ३० ॥ धनुषि वृषे मेषे वा विलग्ने क्रूरैर्दृष्टे विकृतदशनः दंतरोगी स्यात् पापलग्ने पापैर्युक्तं पापलग्नं तस्मिन्यथा प्रागुक्तयोगेन सांकर्यं स्यात् तस्मात्क्रूरग्रहयुक्ते धनुषि वृषे वा लग्ने क्रूरदृष्टे खल्वाटः खलतिरोगी स्यात् नवमद्वितीयद्वा

क्रूरैर्दृष्टे विलग्ने सुविकृतरदनश्चापगोमेषसंज्ञे खल्वाटः पापलग्ने धनुषि गवि तथालोकिते क्रूरखेटैः ॥ धर्मार्थौ स्यात्मजस्था यदि खलखचरा बंधभाक्पूरुषः स्यादेवं लग्ने क्रिये वा धनुषि गवि तथा रश्मिजं बंधनं नुः ॥ ३१ ॥ दुर्गंधिर्दानवेड्ये शनिभवनगते मानवो विग्रहे स्यात्द्वेष्याधीशे बुधर्क्षे तदनु मकरगे तद्वदत्राथ काव्ये ॥ केंद्रस्थे तेन युक्स्यादथ कविरविजौ स्वीयहद्दायुतौ चेत्तद्वच्चंद्रे जयाते तनुसदनगते चानने स्याद्विगंधिः ॥ ३२ ॥

दशपंचमस्थाः क्रूराश्चेत्तदा बंधभाक्पुरुषः स्यात् एवं मेषे धनुषि वृषे वा लग्ने क्रूराक्रांते नुः पुरुषस्य रश्मिबंधनं स्यात् ॥ ३१ ॥ शुक्रे शनिराशिस्थे जातो मानवो विग्रहे शरीरे दुर्गंधिः स्यात् षष्ठाधिपे मिथुनकन्यामकरगे तद्वा द्विग्रहे दुर्गंधिः अथ काव्ये शुक्रे बुधर्क्षे तेन बुधेन युक्ते केंद्रगे सति तद्वद्विग्रहे दुर्गंधिः अथ शुक्रशनी स्वीयहद्दायुतौ स्वात्रिंशांशगौ चेत्तद्वद्विग्रहे दुर्गंधिः अत्र छंदानुरोधात्त्रिंशांशो हद्दाशब्देनोपलक्षितः मेषस्थे चंद्रे लग्नगते दुर्गंधिः स्यात् ॥ ३२ ॥

अथयोगाद्दशासुविचार्यैवकर्तव्यंइन्युपजातिकयाह ग्रहज्ञैर्ग्रहाणांदीप्तदीना।दिज्ञानवद्भिः मानवानांजन्मनिशुभाशुभफलंसुमन्याग्रहलग्नज्ञानसंस्कृतयाबु
न्ध्यात्विचार्यनिश्चयेनवक्तव्यं तथोक्तमृत्युलग्नेदशमेग्रहगणितेजातकर्मावलोक्यविशेषमपियः कथयतिशुभमशुभंवातस्यनमिथ्याभवेत्तथाचप्रद
शितंनीलकंठदैवज्ञैः स्वोच्चेदीप्तःसमाख्यातोनीचेदीनःप्रकीर्तितः मुदितोमित्रगेहस्थःस्वस्थश्चस्वगृहेग्रहः शत्रुगृहेस्मृतःसुप्तोजितोन्यैश्चनिपीडितः नी

एवंग्रहाणांसदसत्फलानांयोगात्ग्रहज्ञैरनुयोजनीयं ॥ शुभाशुभंजन्मनिमानवानांफलंसुमत्याप्रविचार्यनूनं ॥३३॥
त्वद्यैःपद्यैर्गुंफितेसूरितोषेलंकाराख्येजातकेमंजुलेऽस्मिन्॥योगाध्यायःश्रीगणेशेनवर्यैर्वृत्तैर्युक्तोरामरामैःप्रणीतः ॥३४॥
इतिजात०योगाध्यायस्तृ० ॥३॥ भौजंगेकृत्तिकायांशतभिषजितथासूर्यमंदारवारेभद्रासंज्ञेतिथौयाकिलजननमियात्सा
कुमारीविषाख्या॥लग्नस्थौसौम्यखेटावशुभगगनगश्चैकआस्तेततोद्वौवैरिक्षेत्रानुयातौयदिजनुषितदासाकुमारीविषाख्या॥१

चाभिमुखगोयस्तुग्रहः खिन्नस्युसस्मृतः सुवीर्यःकथितःप्राज्ञैःस्वोच्चाभिमुखगोग्रहः अधिवीर्योनिगदितः सुरश्मिः शुभवर्गगः ॥३३॥ अध्यायंसमापय
तिरामरामैस्त्रयस्त्रिंशद्भिः ॥३४॥ इतिजातकालंकारटीकायांयोगाध्यायस्तृतीयः ३ अथविषकन्यायोगाः अथत्रिभिःपद्यैर्विशेषत.विषकन्यायोगानाह
आश्लेषायांकृत्तिकायांतथाशततारकासुनक्षत्रेषुरविशनिभौमवारेषुभद्रासंज्ञकेतिथौद्वितीयासप्तमीद्वादशीसंज्ञायांतिथौयाकन्याजननंनइयात्जन्मप्राप्नु

यात् साविषाख्याविषकन्याभवति अत्रनक्षत्रवारतिथीनांप्रत्येकंद्वितीयोयोगः सयथा आश्लेषारविद्वितीयाप्रथमोयोगः कृत्तिकाशनिसप्तमीद्वितीयोयोगः शततारकाभौमद्वादशीतृतीयोयोगःएषुयोगेषुजाताकन्याविषाख्येत्यर्थः द्वौशुभग्रहौलग्नगौएकःपापोदशमस्थःद्वौपापौशत्रुमाश्रितौयदितत्रकन्याजायतेतदासाविषकन्याभवति ॥ १ ॥ अथक्रमेणापिनक्षत्रतिथिवारयोगानाह अथशनिवारेआश्लेषाद्वितीया तदनुकुजवारेशततारका

मंदाश्लेषाद्वितीयायदितदनुकुजेसप्तमीवारुणर्क्षेद्वादश्यांचद्विदैवंदिनमणिदिवसेयज्जनिःसाविषाख्या ॥ धर्मस्थोभूमिसूनुस्तनुसदनगतःसूर्यसूनुस्तदानींमार्तंडःसूनुयातोयदिजनिसमयेसाकुमारीविषाख्या॥२॥लग्नादिंदोःशुभोवायादिमदनपतिर्द्यूनयायीविषाख्यादोषंचैवानपत्यंतदनुचनियतंहंतिवैधव्यदोषं ॥ इत्थंज्ञेयंग्रहज्ञैःसुमतिभिरखिलंयोगजातंग्रहाणामार्यैरार्यानुमत्यामतमिहगदितंजातकेजातकानां॥३॥

सप्तमी दिनमणिदिवसेरविवारेविशाखाद्वादशीएषुयोगत्रयेषुयस्याःजन्मसाविषकन्याभवति यदिजन्मसमयेभौमशनिसूर्याःक्रमेणनवमलग्नपंचमस्थास्तदाकुमारीसाविषकन्याभवति ॥ २ ॥ अथविषाख्यभंगमाह लग्नाच्चंद्राद्वामदनपतिःसप्तमपतिःशुभग्रहोवाद्यूनयायीसप्तमस्थःविषाख्यदोषंतत्प्रयुक्तं अनपत्यंसंतानरहितत्वंवैधव्यंदोषंचहंतिनाशयति एवमुक्तप्रकारेणइहास्मिन्जातकेआर्यानुमत्यादैवज्ञसभ्यानुमतेजातकानांगदितंअखिलंयोगजातंज्ञेयं

ग्रहाणांस्वभावविशेषःभिन्नैरेवेदंयोगजातंप्रवकुंक्षमनितिभावः ॥ ३ ॥ अध्यायंसमापयतित्वद्यैरित्यादिना ॥ ४॥ इतिश्रीजातकालंकारटीकायांविषकन्याध्यायश्चतुर्थः ॥ ४ ॥ अथायुर्दायाध्यायः ॥ १ ॥ लग्नाधीशोलग्नस्वामीकेंद्रयातैःलग्नचतुर्थसप्तनदशमस्थैःसदीर्घमायुर्दद्यादित्यर्थः शुभग्रहैर्दृष्टः

त्वद्यैःपद्यैर्गुंफितेसूरितोषेलंकाराख्येजातकेमंजुलेऽस्मिन॥कन्याध्यायःश्रीगणेशेनवर्यैर्वृत्तैर्युक्तोवन्हिसंख्यैर्विषाख्यः॥४ इतिश्रीजातकालंकारेविषकन्याध्यायश्चतुर्थः॥४॥आयुर्मूलंजन्मिनांजीवनंचह्याजीवानांनिर्जराणांसुधेव॥एवंप्राहुःपूर्वमाचार्यवर्यास्तस्मादायुर्दायमेनंप्रवक्ष्ये॥१॥लग्नाधीशोऽतिवीर्योयदिशुभविहगैरीक्षितःकेंद्रयातैर्दद्यादायुःसुदीर्घंगुणगणसहितंश्रीयुतंमानवानां॥सौम्याःकेंद्रालयस्थाजनुषिचरजनीनायकेस्वीयतुंगेवीर्याढ्येलग्ननाथेवपुषिचशरदांषष्टिरायुर्नराणां २ सौम्याःकेंद्रालयस्थावपुषिसुरगुरौलग्नतोवासुधांशोरायुर्युक्तंनदृष्टंनचगगनगतैःसप्ततिर्वत्सराणां॥यातामूलत्रिकोणेशुभगगनचराःस्वीयतुंगेसुरेज्येलग्नाधीशेऽतिवीर्येगगनवसुसमास्तुल्यमायुर्नराणां ॥ ३ ॥

अतिवीर्यःअधिकतरबलस्तदाजातानांमानवानांसौम्याः बुधगुरुशुक्राः स्वक्षेत्रस्थाःचंद्रेस्वोच्चगेबलवतिलग्नेशेसतिजातानांनराणांषष्टिरायुर्वर्षाणांषष्टिरायुः स्यात् २लग्नाच्चंद्राद्वासौम्याः पूर्णचंद्रबुधगुरुशुक्राःकेंद्रस्थास्तत्रापिगुरौलग्नगेतत्रदशमस्थैःक्रूरैर्दृष्टंयुक्तंयद्दिनभवतितदावत्सराणांसप्ततिरायु

स्यात्शुभग्रहाःमूलत्रिकोणस्थाः गुरौस्वोच्चगेलग्नेशेबहुबलेसतिनराणांगगनवसुसंख्यंअशीतिवर्षोपलक्षितंआयुःस्यात् एतेषुयोगेषुगुरुगणयुक्त मितिअनुषंगनीयं ॥३॥ सौम्येबुधेतिबलेकेंद्रस्थेसतिअष्टमपदंखेटहीनंयदितदावर्षाणांत्रिंशदायुःस्यात् निधनंसौम्यैक्षितंचेत्गगनहिमकरैर्दशभिःसंयुतःत्रिंशद्वर्षाणांचत्वारिंशदायुःस्यात् अथगुरौस्वराशौस्वद्रेष्काणेसतिमुनिनयनमितंसप्तविंशद्वर्षाणिआयुःस्यात् चंद्रःस्वर्क्षगोलग्नगोवासप्तमेशुभग्र

सौम्येकेंद्रेतिवीर्येयदिनिधनपदंखेटहीनंसमाःस्युस्त्रिंशत्सौम्येक्षितश्चेद्गगनहिमकरैःसंयुतोथोस्वभेचेत्॥स्वद्व्यंशेचामरे
ज्येमुनिनयनमितंस्वर्क्षगोलग्नगोवाचंद्रेद्यूनेशुभश्चेद्गगनरसमितंकोणगाःसौम्यखेटाः ॥४॥ कीटेलग्नेसुरेज्येयदिभवति
तदाखाष्टतुल्यंलयेशोधर्मगेचांगनाथोनिधनभवनगेक्रूरदृष्टेब्धिहस्ताः॥लग्नाधीशाष्टनाथौलयभवनगतौसप्तविंशद्विलग्नेक्रूरे
ज्यौचंद्रदृष्टौयदिनिधनगतःकश्चनास्तोद्विपक्षाः॥५॥

हश्चेत्तदागगनरसमितंषष्टिवर्षमितंआयुःस्यात् शुभग्रहाःपंचमनवमस्थाः कर्किणिलग्नेसुरेज्योयादिभवतितदाखाष्टतुल्यंअशीतिवर्षतुल्यमायुःस्यादित्य ग्रिमश्लोकेनान्वयः ॥४ ॥ अष्टमेशोनवमेभावेलग्नेशेक्रूरदृष्टेअष्टमगतेअब्धिहस्ताश्चतुर्विंशतिरायुःस्यात् लग्नाष्टमेशौअष्टमस्थौयदितदासप्तविंशति वर्षाण्यायुः क्रूरसंयुतःगुरुः चंद्रदृष्टोलग्नेयदिअन्यःकश्चिद्ग्रहः अष्टमस्थः तदाद्विपक्षाद्द्वाविंशतिरायुःस्यात् ॥५॥

लग्नचंद्रौक्रूरग्रहयोगरहितौलग्नेअष्टमंग्रहरहितंकेंद्रेशुभग्रहेयदितदाखशैलाःसप्ततिः शुक्रबृहस्पतीकेंद्रगाचेत्शतंवर्षाणि गुरौकर्कलग्नेभृगुजेकेंद्रगेचशतं
वर्षाणि एतौविशिष्टयोगाइत्यर्थः योगस्यवैशिष्ट्यंयशःसंपत्सूचकत्वमितिज्ञेयं अथशनौनवमगेलग्नस्थेवाचंद्रेव्ययनवमगतेवर्षाणांशतमायुःस्यात् ॥६॥

लग्नेंदूक्रूरहीनौवपुषिसुरगुरौरंध्रभंखेटहीनंकेंद्रेसौम्येखशैलाःसितविबुधगुरूस्याच्छतंकेंद्रगौचेत् ॥ वागीशेकर्कलग्नेशत
मिहभृगुजेकेंद्रगेथार्कसूनौधर्मांगस्थेसुधांशौव्ययनवमगतेहायनानांशतंस्यात् ॥६ ॥ धीःकेंद्रायुर्नवस्थायदिखलखचरानोगु
रौभेंविलग्नेकेंद्रेकाव्येगुरौवाशुभमपिनिधनंसौम्यदृष्टंशतंस्यात् ॥ लग्नादिंदोर्नखेटायदिनिधनगतावीर्यभाजौसितेज्यौपूर्णायुःस्वी
यराशौशुभगगनचराःषष्टिरंगोच्चगेब्जे ॥ ७ ॥ कोदंडांत्यार्धमंगंयदिसकलखगाःस्वोच्चगाज्ञेजिनांशैगोस्थेपूर्णेचकेंद्रेसुरप
तिभृगुजौलाभगेब्जेपरायुः ॥ शुक्रेमीनेतनुस्थेनिधनगृहगतेसौम्यदृष्टेसुधांशौजीवेकेंद्रेशतंस्यादथतनुगृहपेछिद्रगेपुष्करेब्जे ॥ ८

क्रूरग्रहाःपंचमकेंद्रनवमस्थाःनोभवेयुः धनुर्मीनेलग्नेकेंद्रेशुक्रेगुरौवानवमाष्टमंचशुभग्रहानलेकितंयदितदाशतंवर्षाण्यायुःस्यात् लग्नाच्चंद्राच्चग्रहाःअष्टम
स्थाःनस्युः शुक्रगुरूबलवंतौतदापूर्णायुःव्योमार्कवर्षायुःस्यात् शुभग्रहाःस्वराशिस्थाःवृषेलग्नेवाचंद्रेसतिवर्षाणांषष्टिरायुःस्यात् ॥ ७ ॥ कोदंडांत्यार्धे
लग्नेधनुर्लग्नाद्द्वितीयहोरायांबुधेजिनांशेवृषस्थेअन्येसर्वग्रहाःस्वोच्चगाःतदापूर्णमायुःस्यात् गुरुशुक्रौकेंद्रेसतिलाभगेचंद्रेपरायुःपूर्णायुः शुक्रमीनलग्नगे

सौम्यग्रहदृष्टे चंद्रे अष्टमस्थे गुरौ केंद्रे सति वर्षाणां शतमायुः स्यात् अथ तनुगृहपे इत्यग्रिमश्लोकेनान्वयः ॥ ८ ॥ लग्नपे अष्टमस्थे चंद्रे दशमस्थे गुरौ बलवति अ न्ये ग्रहाः नवमभवनगाः तदा शतायुः कर्के लग्ने चंद्रजीवौ तृतीयषष्ठैकादशे शुभग्रहयुक्तौ शुक्रबुधौ च केंद्रे यदि तदापि शतायुः शतायुरिति देहलीदीपकन्याये नोभयत्रान्वेति रविभौमशनयः गुरुनवमांशस्थाः केंद्रे स्युः लग्नस्थे गुरौ शेषाः अष्टमरहितभावस्थाः तदा नराणां शरगजतुलितं पंचाशीतिवर्षमितमायुः

वागीशे वीर्ययुक्ते नवमभवनगाः सर्वखेटाः शतायुः कर्कै गे जीवचंद्रौ सहजरिपुभवे सत्कविज्ञौ च केंद्रे ॥ केंद्रे सूर्यारमंदा गुरुन वलवगा वाक्पतौ लग्नयाते व्यष्टस्थानेषु शेषाः शरगजतुलितं स्यान्नराणां तदायुः ॥ ९ ॥ क्रूराः सौम्याशयाता उपचयगृह गाः कातराः कंटकस्थाः सौम्या व्योमार्कसंख्या यदि तनुपकुजौ रंध्रगौ नो परायुः ॥ केंद्रे लग्नेशजीवौ नवसुतनिधने कंटके नो खलाख्याः संपूर्णं पापखेटा यदि गुरुजलगा जीवभावे च सौम्याः ॥ १० ॥

स्यात् ॥ ९ ॥ शुभग्रहनवांशस्थाः क्रूराः उपचयस्थाः त्रिषट्दशमायस्थाः कातराः भीरवः युद्धे पराजिता इति यावत् शुभग्रहाः कंटकस्थाः केंद्रस्थाः तदा व्योमार्कसंख्यं विंशदधिकं शतं वर्षाणामायुः परायुः स्यात् परायुर्योगेषु शनिकुजौ अष्टमस्थौ चेत्तदा नो परायुः परायुर्न भवतीत्यर्थः लग्नेशगुरू केंद्रस्थौ क्रूरास्त्रिकोणाष्टमकेंद्रवर्जिताश्चेत्तदा पूर्णायुः स्यात् क्रूरग्रहाः गुरुजलगाः नवमचतुर्थगाः शुभाः जीवनवांशस्थाः यद्वा समराशिनवांशस्थाः संतः व्ययधनगृहगाः शुभाः पूर्णश्चंद्रः लग्नस्थः इह योगे जातानां शतवर्षाण्या

युः कथंभूतंइंदिरामंदिरंसंपदासहितमितिआग्रिमश्लोकपूर्वार्धेनसंबंधः ॥ १० ॥ शुभग्रहयुक्तेलग्नेशेलग्नेअन्यग्रहैर्नदृष्टेऽष्टमेशेऽष्टमगतेसतिवर्षाणांविंश
तिरायुःस्यात् अष्टमेशेलग्नेशेचकेंद्रस्थेबलरहितेचसतित्रिंशद्वर्षाण्यायुःस्यात् ॥ ११ ॥ चंद्रेआपोक्लिमस्थेतृतीयषष्ठनवमद्वादशगतेतनुपेलग्नेशेआ

युग्मर्क्षांशेगतावाव्ययधनगृहगाश्चेच्छुभाःशीतभानुःसंपूर्णोलग्नयायीशतमिहजनितामिंदिरामंदिरंस्यात् ॥ लग्नेशेसौ
म्ययुक्तेवपुषिचलयपेरंध्रगेनान्यदृष्टेविंशत्केंद्रेलयेशेबलवियुजितथालग्नपेत्रिंशदायुः ॥ ११ ॥ इंदावापोक्लिमस्थेतदनु
तनुपतौनिर्बलेपापदृष्टेदंतैस्तुल्यंततोऽर्कःखलखगविवरेलग्नगोब्जास्त्रिसंख्यं ॥ रिःफेकेंद्रेसुरेज्येगुरुरिपुसहजेस्यात्सपापे
गनाथेरामाब्दंककंलग्नेकुजतुहिनकरोकेंद्ररंध्रंग्रहोनं ॥ १२ ॥

पोक्लिमस्थेउभयेनिर्बलेक्रूरदृष्टेचसतिदंतैस्तुल्यंद्वात्रिंशद्वर्षाण्यायुःस्यात् क्रूरग्रहयोरंतरेलग्नगोऽर्कश्चेत्तदाऽब्जात्रिसंख्यंएकत्रिंशद्वर्षाण्यायुःगुराद्वादशेकें
द्रेवासपापेलग्ननाथेनवमषष्ठतृतीयेसतिरामाब्दंत्रीणिवर्षाण्यायुः कर्कलग्नेचंद्रभौमेकेंद्राणिअष्टमभवनंचग्रहरहितंयदितदारामाब्दंस्यादितिआग्रिमस्थे

नान्वयः ॥ १२ ॥ अष्टमेशेलग्नगतेअष्टमभवनंशुभग्रहरहितंखवेदाश्चत्वारिंशद्वर्षाण्यायुःस्यात् मकरस्थौशनिरवीतृतीयषष्ठगौअष्टमेशेकेंद्रगेपारावाराब्धिसंख्यंचतुश्चत्वारिंशद्वर्षाण्यायुःस्यात् तदनुशुभग्रहाः सद्धवर्क्षेशुभग्रहनवांशेराशौवाऽत्रत्रिंशद्वर्षाण्यायुःस्यात्॥१३॥लग्नेशेक्रूरदृष्टेशुभग्रहाः

रामाब्दंस्याल्लयेशेवपुषिचनिधनंसौम्यहीनंखवेदालग्नेशेरंध्रयातोवपुषिनिधनपःस्यान्नृणांबाणसंख्यं ॥ नक्रेतिग्मांशुमंदौसहजरिपुगतौकंटकेरंध्रनाथेपारावाराब्धिसंख्यंतदनुशुभखगाःसद्धवर्क्षेऽत्रखाग्निः ॥ १३ ॥क्रूरैर्दृष्टेंगनाथेयादिशुभविहगावीर्यवंतःसुधांशौसंस्थेसौम्यिगणेचद्गुणमुनितुलितंरंध्रगैर्मध्यमायुः॥स्याच्चंद्रादन्हिपापैरथतपनसुतेद्व्यंगलग्नेहियातेरिःफेशेरंध्रनाथेयादिबलरहितेकंकपत्राक्षसंख्यं ॥ १४ ॥ कर्कंगेसतसप्तौखलविहगयुतेपुष्करस्थेद्विजेशेकेंद्रेयातेसुरेड्येशरविशिखमितंपुष्करेनीरगेवा ॥ सौम्येपीयूषभानौव्ययनिधनगतेदेहगेवाकवीज्यावेकर्क्षेऽयोमवाणेऽथय रिपुनिधनेलग्ननाथाढ्यचंद्रे ॥१५॥

बलिनः चंद्रेशुभवर्गगेक्वापिभावेस्थितेसतिगुणमुनितुलितांत्रिसप्ततिवर्षतुल्यमायुःस्यात् चंद्रादष्टमगैःपापैःदिवाजन्मनिमध्यमायुःस्यात् अथशनौद्व्यंगेद्विस्वभावसंज्ञकेलग्ने स्थितेद्वादशभावनाथेअष्टमनाथेचबलहीनेसतिकंकपत्राक्षसंख्यंपंचविंशतिवर्षाण्यायुःस्यात् ॥ १४ ॥ सूर्येकर्कलग्नेक्रूरयुतेचंद्रेद

शमगेगुरौकेंद्रस्थेशरविशिखमितंपंचपंचाशद्वर्षमितमायुः स्यात् बुधेदशमेचतुर्थगेवाचंद्रेव्ययेऽष्टमेलग्नेवाशुक्रगुरूएकराशिगौक्वापिस्थितौचेत्तदाव्योम
बाणैःसमंपंचाशद्वर्षमितमायुःस्यात् लग्नेशयुक्तेचंद्रेद्वादशषष्ठाष्टमेलग्नेशेशन्यंशेशनिनवांशगेभुजगशरमितंअष्टपंचाशन्मितमायुःस्यादित्यग्रिमश्लोके
नान्वयः ॥१५॥ शुभग्रहाः अष्टमव्यतिरिक्तभावस्थाःलग्नेशःपापयुक्तःत्रिकस्थस्तदाषष्टिवर्षाण्यायुः स्यात् सूर्यसहितश्चंद्रराशीशःलग्नेशश्चमृत्युगःगुरुः

शन्यंशेलग्ननाथेभुजगशरमितंस्यादथोसौम्यखेटारंध्रोनादिहनाथोव्ययरिपुनिधनेपापयुक्षष्टिरायुः ।। राशीशोलग्नना
थोदिनमणिसहितोमृत्युगोवाक्पतिश्चेन्नोकेंद्रेषष्टिरायुर्वपुषिदिनपतिः शत्रुभौमान्वितश्चेत् ।।१६ ।। वागीशेहीनवीर्येव्यय
तनुजगतेयामिनीशेखशैलाधमेंसर्वैःपरायुःखगखलवलगैःकेंद्रयातैरशीतिः ।। क्रूरैःक्रूरर्क्षयातैः शुभभवनगतैःसौ
म्यखेटैःसवीर्यैर्लग्नेशेस्यात्परायुःसुतभवनगतैःषष्टिरायुर्नराणां ।। १७ ।।

केंद्रगोनचेत्षष्टिवर्षाण्यायुःस्यात् निजशत्रुभौमाभ्यांयुक्तःसूर्योलग्नेगुरौबलहीनेचंद्रेव्ययपंचमस्थेखशैलाःसप्ततिवर्षाण्यायुःस्यादित्यग्रिमश्लोकेनान्वयः
॥ १६ ॥ सर्वैःग्रहैःक्रूरराशिस्थैः शुभैःशुभगृहगतैःलग्नपतौसबलेपरायुःस्यात् सुतभवनगतैःसर्वैर्ग्रहैःनराणांषष्टिवर्षाण्यायुःस्यात् ॥ १७ ॥

धनुर्धरराश्यंन्यनवांशेलग्नगेशुभैःप्रथमनवांशस्थैःकेंद्रगैर्वर्षाणांशतमायुःस्यात् तृतीयचतुर्थाष्टमस्थैःसर्वैश्चिरायुःदीर्घायुःस्यात् लग्नाच्चंद्राच्चअष्टमेशे
व्ययकेंद्रस्थेअष्टाविंशतिवर्षाण्यायुःस्यात् केंद्रेशुभग्रहरहितेअष्टमस्थश्चेत्कश्चिद्ग्रहस्तदाखरामास्त्रिंशद्वर्षाण्ययुःस्यात्॥ १८॥चंद्रेक्षीणेसतिक्रूरग्रहोऽष्ट

सारंगस्यांत्यभागेयदिवपुषिगतेचाद्यभागेचकेंद्रेसौम्यैःखेटैःशतंस्याद्वसुसहजसुखेस्याच्चिरायुःसमस्तैः ॥ लग्नात्प्राले
यभानोर्निधनसदनपेरिःफकेंद्रेऽष्टविंशत्केंद्रेसौम्यग्रहोनेयदिमृतिभवनेकश्चिदास्तेखरामाः ॥ १८॥ क्षीणेप्रालेयभानौय
दिखलखचरोमृत्युगोमृत्युनाथःकेंद्रस्थोलग्ननाथोनिजबलरहितःखाश्वितुल्यंतदायुः ॥ सौम्यैरापोक्लिमस्थैर्दिनमणि
जाविधूवैरिरंध्रालयस्थौतुल्यंकामांकुशैःस्यादथधनमृतिगौरिःफगौपापखेटौ ॥ १९ ॥ हीनौस्वर्भानुनावायदिहिममहसा
व्योमनेत्रप्रमाणंकेंद्रस्थौसूर्यमंदौयदिवपुषिकुजःपुष्पबाणांकुशंस्यात् ॥ शुक्रेव्यावंगयातौतनयभवनगौभौमपापावनायुर्ज
न्मेशःसार्कलग्नेखलशुभसहितश्चेक्षितःस्यादनायुः ॥ २० ॥

मस्थःमृत्युभावेशःकेंद्रस्थःलग्नेशोनिर्बलस्तदाखाश्वितुल्यंविंशतिवर्षाण्यायुःस्यात् शुभग्रहैःआपोक्लिमगतैःशनिचंद्रौषष्ठाष्टमस्थौतदाकामांकुशैर्नखैस्तु
ल्यंविंशतिवर्षाण्यायुःस्यात् अथेत्यग्रिमश्लोकेनान्वयः ॥ १९ ॥ अथराहुचंद्ररहितौक्रूरग्रहौद्वितीयाष्टद्वादशगौतदाव्योमनेत्रप्रमाणंविंशतिसंख्यम ॥२९॥

युः सूर्यशनिकेंद्रगौकुजोलग्नगस्तदापुष्पबाणांकुशंविंशद्वर्षाण्यायुःस्यात् शुक्रगुरूलग्नस्थैभौमपापैपंचमस्थैतदाअनायुःअल्पायुःस्यात् कर्कयु
क्तोलग्नेशःजन्मराशिसंस्थितःअन्यैर्युतःदृष्टश्चेत्तदाऽनायुःअल्पायुःस्यात् ॥ २० ॥ जातकशास्त्रसमुद्रोत्तीर्णैःसमस्तजातकशास्त्रज्ञादिभिरित्यर्थः पूर्वे
यद्योगजमायुः प्रोक्तंप्रणीतंतस्मात्पूर्वोक्तात्सारभूतंदृढांशभूतंआयुर्यदेतदुक्तंतत्पुण्याचारश्लोकभाजांसदाचारोपलक्षितधर्मयशोयुक्तानांनराणांघटतइत्य

यत्संप्रोक्तंयोगजंपूर्वमायुर्होरापारावारपारंगमज्ञैः ॥ तस्मादायुःसारभूतंयदेतत्पुण्याचारश्लोकभाजांनराणां ॥ २१ ॥
बलाबलविवेकेनपुष्कराळयशालिनां सुमनोभिरिदंदेश्यमायुर्धर्मादिशालिनां॥२२॥ त्वद्यैःपद्यैर्गुंफितेसूरितोषेऽलंकाराख्येजातकेमंजुलेऽस्मिन्॥आयुर्दायश्रीगणेशेनवर्यैर्वृत्तैर्युक्तोवाहुपक्षैःप्रणीतः ॥२३॥इतिश्रीजातकालंकारेपंचमोऽध्यायः॥५॥लग्नाधीशेऽर्थगेचेद्धनभवनपतौलग्नयातेर्थवान्स्याद्बुल्या चारप्रवीणःपरमसुकृतकृत्सारभृद्भोगशीलः॥ भ्रातृस्थानेंगनाथेसहजभवनपेलग्नयातेल्पशक्तःसद्बंधूराजपूज्यःकुलजनसुखदोमातृपक्षेणयुक्तः ॥१॥

ध्याहारः ॥ २१ ॥अथादेशविधि
रनुष्टप्वृत्तेनाह बलाबलविवेकेनेति पुष्कराळयशाळिनांसूर्यादिग्रहाणांबलाबलविचारेणसुमनोभिरिदमायुः कथनीयंधर्मादिशालिनांभवतिपापकर्मिणां
नभवतीतिअर्थात्सिद्धं ॥ २२ ॥ अध्यायंसमापयति त्वद्यैःपद्यैरिति ॥ २३ ॥ इतिश्रीजातकालंकारटीकायांपंचमोऽध्यायः ॥ ५ ॥ अथलग्नेश धने

शादीनांव्यत्ययात्फलान्याह लग्नेशेधनगेधनेशेलग्नगेसतिजातोधनवान्बुध्याचारप्रवीणःबुध्याचारेणचनिपुणः उत्कृष्टपुण्यकृत्बलवान्भोगैकलीला श्चस्यात् लग्नेशेसहजेसहजेशेलग्नस्थेअल्पवीर्यः प्रशस्तबंधुयुक्तःकुलजानांसुखदःमातृपक्षेणसहितश्चस्यात्॥१॥चतुर्थेलग्नेशेलग्नगेचतुर्थेशेजातःक्षमायुक्तःताताज्ञाराजकार्यप्रगुणमतियुक्तःपितुराज्ञायांराजकार्येचऋजुमतिःसन्प्रशस्तोगुरुःयस्य यद्वासतोगुरुःस्वकीयपक्षेचास्थितःस्यात् पंचमेशेलग्नेलग्नेशे

तुर्येशेलग्नयातेतदनुतनुपतौतुर्यगेस्यात्क्षमावान्ताताज्ञाराजकार्यप्रगुणमतियुतःसद्गुरुःस्वीयपक्षः ॥ लग्नस्थेसूनुनाथेतनुजपदगतेलग्ननाथेमनस्वीविद्यालंकारयुक्तोनिजकुलविदितोज्ञानवान्मानसक्तः ॥ २ ॥ षष्ठेशेलग्नयातेतदनुतनुपतौषष्ठगेव्याधिहीनोनित्यंद्रोहादिसक्तोवपुषिसबलवान्द्रव्यवान्संग्रहीस्यात् ॥ मूर्तीशेकामयातेमदनसदनपेमूर्तिगेतातसेवीलोलस्त्रांतोंगनाथोभवतिहिमनुजःसेवकःशालकस्य ॥ ३ ॥

पंचमस्थेसतिनरःप्रशस्तमनाःविद्ययाभूषितःस्वकुलेविख्यातोज्ञानवान्सदसद्वस्तुतःमानेअभिमानेसक्तः॥२॥षष्ठेशेलग्नगेतदनुलग्नेगषष्ठेशेसतिनिन्यंरोगरहितः अतएवशरीरेबलवान्द्रोहादौसक्तःआदिशब्देनपरानिष्टकरणादिज्ञेयं सग्रहपरःअतोद्रव्यवान्स्यात् लग्नेशेसप्तमस्थेसप्तमेशेलग्नस्थसतितदामनुजः पितृभक्तःस्त्रीविषयेचंचलमनाशालकस्यभार्याभ्रातुःकार्यकरःस्यात्॥३॥ ॥ ॥ ॥ ॥

लग्नेशेष्टमगे अष्टमेशे लग्नगे द्यूतव्यवहारे निपुणः विक्रमवान् चौर्यादिसहितः आदिशब्देन वंचनासु निपुणः राजतो लोकतो वा निधनपदं मरणमाप्नुयात् लग्नेशे नवमस्थे नवमेशे लग्नस्थे सति विदेशवासी नितांतं धर्मरतः देवाराधने गुरुसेवायां च तत्परः राजसत्कारभाजनश्च स्यात् ॥ ४॥ लग्नेशे कर्मस्थे कर्मनाथे लग्नगे

अंगेशे रंध्रयाते निधनगृहपतावंगगे द्यूतवृद्धिः शूरश्चौर्यादिसक्तो निधनपदमियाद्भूपतेर्लोकतो वा ॥ देहाधीशे शुभस्थे शुभभवनपतौ देहसंस्थे विदेशी धर्मासक्तो नितांतं सुरगुरुभजने तत्परो राजमान्यः ॥ ४ ॥ कर्मस्थे लग्ननाथे गगनभवनपे लग्नगे भूपतिः स्यात्ख्यातो लाभे च रूपे गुरुभजनरतो लोलुपो द्रव्यनाथः ॥ लाभेशे लग्नयाते तनुभवनपतौ लाभसंस्थे सुकर्मा दीर्घायुः क्षोणिनाथो शुभविभवयुतः कोविदो मानवः स्यात् ॥ ५ ॥ लग्नेशे रिःफयाते व्ययसदनपतौ लग्नगे सर्वशत्रुर्बुद्ध्याहीनो नितांतं कृपणतरमतिर्द्रव्यनाशी विलोलः ॥ इत्थं तातादिकानामपि जनुषि तथा खेचराणां हि योगाद्वाच्यं होरागमज्ञैस्तदनु तनुपयुक् भार्गवे राजपूज्यः ॥ ६ ॥

भूपालः लाभेन तद्वत्सुरूपेण च विख्यातः गुरुसेवायां प्रीतिमान् लोलुपः चंचलचित्तः द्रव्याणां स्वामी च स्यात् लाभेशे लग्नस्थे लग्नस्थे लाभपे शोभनकर्मा दीर्घायुः क्षोणीनाथो राजा शुभविभवयुतः कोविदो धीरश्च मानवः स्यात् ॥ ५ ॥ लग्नेशे रिःफयाते व्ययनाथे लग्नगे सांते सर्वशत्रुः सर्वेषां जनानां शत्रुः सर्वे शत्रवो यस्य

तिवायतोनिरंतरंबुध्याहीनः बुद्धिरहितः कृपणतरमतिः अतिशयवित्तहीनबुद्धिः अतश्चद्रव्यनाशीविलोलः निर्विचारीशीघ्रकारीचस्यात् इत्थमुक्तप्रका रेणजातकजन्मसमयेतातादिकानामपिखेचराणांयोगानुफलंहोरागमज्ञैर्वक्तव्यं अयमर्थः जातकस्यजन्मलग्नाद्दशमंभवनंतातगृहंतदेवलग्नंप्रकल्प्यत स्मिमानुक्रमानुक्रमेणधनादिभावान्परिकल्प्यतत्रलग्नभावेशयोर्व्यत्ययस्थितिमवलोक्य लग्नाधीशेऽर्थगेचेद्धनभवनपतौलग्नयातेऽर्थवान्स्यादित्यादिना उक्तोदाहरणेनतातादीनांअर्थवत्वादिफलंहोराशास्त्रज्ञैर्वाच्यं अथमंगलायशुभफलेआदेशंसमापयति तदनुतनुपमुकूर्भागवेलग्नेराहुकेशुक्रेत्रिकव्यतिरि

एवंस्वमस्यासुफलप्रबोधंश्रीजातकालंकरणंमनोज्ञं ॥ वृत्तैरनंतेशमितैर्निबद्धंमयामुदेदैवविदामुदारं ॥ ७ ॥
पुष्करालयवशागुणसाराजातकोक्तिरमलेवमराला संस्कृताविहरतांभवतांमेमानसेऽतिसरलेसुकवीनां ॥ ८ ॥

कभावगइतिशेषांतत्रजातोराजपूज्योभवति राजपूज्यशब्देनवांछितपदार्थानांसौलभ्यंध्वन्यते ॥ ६ ॥ एवमुक्तप्रकारेणमयागणेशेनस्वबुध्याउदा रंसारनिरूपणंमनोज्ञंपदपदार्थरुचिरंसुफलप्रबोधंस्फुटफलजनकंदैवज्ञानांप्रमोदाय अनंतेशमितैर्दशाधिकशतप्रमितैर्वृत्तैःश्रीजातकालंकरणंनिबद्धंविर चितं ॥ ७ ॥ अथस्वरचितग्रंथस्यकविमनोरुचिरत्वंप्रार्थयतेमेममजातकोक्तिः भवतांपूज्यानांकवीनांअतिसरलेमानसेनिर्मलामरालाहंसीविहरतां ॥३१॥
कथंभूताजातकोक्तिः पुष्करालयवशापुष्करमाकाशस्तदेवालयंयेषांतेपुष्करालयाःग्रहाःतेषांवशाधीनाशुभाशुभसूचकग्रहोपयोज्याइत्यर्थः हंसीपक्षेपुष्क

रंजलंतस्यालयोमानसः तद्वशात्तद्वर्तिनीत्यर्थः गुणसाराजातकगुणानांसारोपदेशोऽर्थोयस्यांसा हंसीजलेगुणसाराहितगुणाद्यैश्वर्ययुक्ता राजहंसास्तुते चंचुचरणैर्लोहितैःसिताइतिअभिधानात् अमलाशुद्धदोषरहिताइत्यर्थः पक्षेऽमलानिर्मलेत्यर्थः संस्कृतामनोज्ञादिवाक्यपरिष्कृताहंसीपक्षेनिसर्गरुचि राइत्यर्थः ॥ ८ ॥ अथशालिन्याऽध्यायंसमापयति त्द्वद्यैःपद्यैरितिस्पष्टार्थः ॥ ९ ॥ इतिश्रीजातकालंकारटीकायांषष्ठाध्यायः ॥ ६ ॥ अथवि

त्द्वद्यैःपद्यैर्गुंफितेसूरितोषेलंकाराख्येजातकेमंजुलेऽस्मिन् ॥ भावाध्यायःश्रीगणेशेनवर्यैर्वृत्तैर्युक्तोऽष्टाभिषष्ठःप्रणीतः ॥ ९ ॥ इतिजातकालंकारेषष्ठाऽध्यायः ॥ ६ ॥ अभूदवनिमंडलेगणकमंडलाखंडलःश्रुतिस्मृतिविहारभूर्विबु धमंडलीमंडनं ॥ प्रचंडगुणगुर्जराधिपसभाप्रभातप्रभाकवींद्रकुलभूषणंजगतिकान्हजीकोविदः ॥ १ ॥ ॥

शिष्टंस्ववंशंसंख्यापयन्ग्रंथसमाप्तौदेशकालविशेषंप्रख्यापयतित्रिभिःपृथ्वीशार्दूलविक्रीडितैर्वृत्तैः अवनिमंडलेभारद्वाजकुलेनाम्नाकान्हजीकोविदःपंडि तःअभून् सकीदृशःजगतिलोकेमंडलज्योतिर्विद्देवाचार्यः स्युरुत्तरपदेव्याघ्रपुंगवर्षभकुंजराः सिंहशार्दूलनागाद्याःपुंसिश्रेष्ठार्थगोचराइत्यभिधानात् श्रुतिस्मृतिविहारभूःप्रत्ययःश्रुतिस्मृतिपंडितपाठनद्वारातासांविहारमिह विबुधमंडलीमंडनंपंडितंशोभादायकइत्यर्थः प्रचंडगुणगुर्जराधिपसभाप्रभातप्र भाप्रचंडारिपुविजयशालिनैकगुणः संभवग्रहादयोयस्यसगुर्जराधिपःगुर्जरदेशाधिपःतस्यसभायाः प्रभाप्रभेवप्रभाप्रकाशकइत्यर्थः कवींद्रकुलभूषणंक

विश्रेष्ठंसंदेहस्यप्रभावहम् ॥१॥ तस्मात्कान्हजीकोविदात्परमंउत्कृष्टंसुतानांत्रयंबभूवतेषुज्यायान्ज्येष्ठःग्रहज्ञतिलकःगणकश्रेष्ठःसुधीःश्रीसूर्यदासःअभवत् तदनुजःतत्पश्चाज्जातःश्रीमान्वेदवित्सर्वकलानिधिःसर्वकलाकुशलःगोपालनामाअभवत् तदनुजः श्रीमतांदैवज्ञानांचश्रेष्ठःश्रीरामकृष्णोऽभवत्॥ २॥ तत्रगोपालसूनुः गणेशः मार्गणरामसायकधरासंख्येशाकेपंचत्रिंशदधिकपंचदशमितेशाकेनभस्येभाद्रपदमासेब्रह्मपुरेसूर्यपुरेइदंसुजातकंशोभनंजातकंश्री

भारद्वाजकुलेबभूवपरमंतस्मात्सुतानांत्रयंज्यायांस्तेष्वभवद्ग्रहज्ञतिलकः श्रीसूर्यदासः सुधीः ॥ श्रीमान्सर्वकलानिधिस्त
दनुजोगोपालनामाभवच्छ्रीमद्दैवविदांवरस्तदनुजः श्रीरामकृष्णोभवत्॥२॥शाकेमार्गणरामसायकधरा१५३५ संख्येन
भस्येतथामासेब्रह्मपुरेसुजातकमिदंचक्रेगणेशः सुधीः ॥ छंदोलंकृतिकाव्यनाटककलकाभिज्ञःशिवाध्यापकस्तत्रश्रीशि
वविन्मुदेगणितभूर्गोपालसूनुःस्वयं ॥ ३ ॥ ॥ ॥ ॥

शिवाख्यविदःप्रमोदायचक्रेकृतवान्कथंभूतोगणेशःशिवाध्यापकोशिवोअध्यापकउपाध्यायोयस्यछंदोलंकृत्यादिवत् छंदांसिमात्रावृत्तभेदाभिन्नानिवृत्तानि अलंकृतयःउपमाद्यलंकाराःकाव्यानिगद्यभेदेनाद्विविधानिनाटकानिसंस्कृतप्राकृतभाषानिबद्धानिकलाश्चित्रकर्माद्याःगणितभूर्गणिताश्रयःसिद्धांत

विदित्यर्थः ॥ ३ ॥ अध्यायं पूरयति स्फुटैःपद्यैरितिशास्त्रार्थः ॥ ५ ॥ श्रीमद्रुक्मकुलेनगोपीनाथशःशुक्लीकृते जातके आमील्कृष्णगदयाभरणमुदितः कृष्णो जयात्सुकृती ॥ तट्टीकेण विभाविता तिरुचिरा सज्जातकालंकृतिःश्रीरेषाहरभानुनामतिमतामोदाय भूयाच्चिरं ॥ १ ॥ इतिश्रीमच्छुक्लोपनामकहरभानुभा





येपठिष्यंतिदैवज्ञास्तेषामायुःसुखंशिवम् ॥ भूयात्कैरवकुंदाभासुकीर्तिः सर्वतोदिशम् ॥४॥ स्फुटैःपद्यैर्गुंफिते
सूक्तिपेशलेऽलंकाराख्यजातकमंजुलेऽस्मिन् ॥ वंशाऽध्यायःश्रीगणेशेनवृत्तैर्युक्तोविदेःशैलसंख्यैःप्रणीतः ॥ ५ ॥
इतिश्रीगणेशेनविरचितजातकालंकारसप्तमोऽध्यायःसमाप्तः ॥ ॥ ॥ ॥

विता जातकालंकारटीकासमाप्ता श्रीकृष्णार्पणमस्तु श्रीसीतारामचंद्रप्रसन्न ॥ ॥ ॥ ॥ ॥ ॥ ॥



॥ईं पुस्तकशके १७८७ क्रोधननामसंवत्सर फाल्गुनशुध्व २ मंदवारीं मुंबई येथें बापूसदाशिवशेटहेगिष्टेयांचे छापखान्यांत छापिलें ॥

